एवं कृत्वा व्रतविधिमुद्यापनमथाचरेत् ।
जन्माष्टमीव्रतमिव कर्तव्यं फलकाङ्क्षिभिः ॥ ५५

अकिञ्चनेषु भक्तेषु प्रायो नोद्यापनाग्रहः ।
श्रवणेनैव पूतास्ते निष्कामा वैष्णवा यतः ॥ ५६

एवं नगाहयज्ञेऽस्मिन्समाप्ते श्रोतृभिस्तदा ।
पुस्तकस्य च वक्तुश्च पूजा कार्यातिभक्तितः ॥ ५७

प्रसादतुलसीमाला श्रोतृभ्यश्चाथ दीयताम् ।
मृदङ्गतालललितं कर्तव्यं कीर्तनं ततः ॥ ५८

जयशब्दं नमश्शब्दं शङ्खशब्दं च कारयेत् ।
विप्रेभ्यो याचकेभ्यश्च वित्तमन्नं च दीयताम् ॥ ५९

विरक्तश्चेद्भवेच्छ्रोता गीता वाच्या परेऽहनि ।
गृहस्थश्चेत्तदा होमः कर्तव्यः कर्मशान्तये ॥ ६०

प्रतिश्लोकं तु जुहुयाद्विधिना दशमस्य च ।
पायसं मधु सर्पिश्च तिलान्नादिकसंयुतम् ॥ ६१

अथवा हवनं कुर्याद्गायत्र्या सुसमाहितः ।
तन्मयत्वात्पुराणस्य परमस्य च तत्त्वतः ॥ ६२

होमाशक्तौ बुधो हौम्यं दद्यात्तत्फलसिद्धये ।
नानाच्छिद्रनिरोधार्थं न्यूनताधिकता[1]नयोः ॥ ६३

1 स्तयोः

दोषयोः प्रशमार्थं च पठेन्नामसहस्रकम् ।
तेन स्यात्सफलं सर्वं नास्त्यस्मादधिकं यतः ॥ ६४

द्वादश ब्राह्मणान्पश्चाद्भोजयेन्मधुपायसैः ।
दद्यात्सुवर्णधेनुं च व्रतपूर्णत्वहेतवे ॥ ६५

शक्तौ पलत्रयमितं स्वर्णसिंहं विधाय च ।
तत्रास्य पुस्तकं स्थाप्य लिखितं ललिताक्षरम् ॥ ६६

सम्पूज्यावाहनाद्यैस्तदुपचारैः सदक्षिणम् ।
वस्त्रभूषणगन्धाद्यैः पूजिताय यतात्मने ॥ ६७

आचार्याय सुधीर्दत्वा मुक्तः स्याद्भवबन्धनैः ।
एवं कृते विधाने च सर्वपापनिवार[1]णे ॥ ६८

फलदं स्यात्पुराणं तु श्रीमद्भागवतं शुभम् ।
धर्मकामार्थमोक्षाणां साधनं स्यान्न संशयः ॥ ६९

कुमाराः—

इति ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ।
श्रीमद्भागवतेनैव भुक्तिमुक्ती करे स्थिते ॥ ७०

सूतः—

इत्युक्त्वा ते महात्मानः प्रोचुर्भागवतीं कथाम् ।
सर्वपापहरां पुण्यां भुक्तिमुक्तिप्रदायिनीम् ॥ ७१

शृण्वतां सर्वभूतानां सप्ताहं नियतात्मनाम् ।

---

1 के

यथाविधि ततो देवं तुष्टुवुः पुरुषोत्तमम् ॥ ७२

तदन्ते ज्ञानवैराग्यभक्तीनां पुष्टता परा ।
तारुण्यं परमं चाभूत्सर्वभूतमनोहरम् ॥ ७३

नारदश्च कृतार्थोऽभूत्सिद्धे स्वीये मनोरथे ।
पुलकीकृतसर्वाङ्गः परमानन्दसम्भृतः ॥ ७४

एवं कथां समाकर्ण्य नारदो भगवत्प्रियः ।
प्रेमगद्गदया वाचा तानुवाच कृताञ्जलिः ॥ ७५

नारदः—

धन्योऽस्म्यनुगृहीतोऽस्मि भवद्भिः करुणापरैः ।
अद्य मे भगवाँल्लब्धः सर्वपापहरो हरिः ॥ ७६

श्रवणं सर्वधर्म्येभ्यो वरं मन्ये तपोधनाः ।
वैकुण्ठस्थो यतः कृष्णः श्रवणाद्यस्य लभ्यते ॥ ७७

सूतः—

एवं ब्रुवति वै तत्र नारदे वैष्णवोत्तमे ।
परिभ्रमन्समायातः शुको योगेश्वरस्तदा ॥ ७८

तत्राययौ षोडशवार्षिकस्तदा
व्यासात्मजो ज्ञानमहाब्धिचन्द्रमाः ।
कथावसाने निजलाभपूर्णः
प्रेम्णा पठन् भागवतं शनैः शनैः ॥ ७९

दृष्ट्वा सदस्याः परमोरुतेजसं

सद्यः समुत्थाय ददुर्महासनम् ।

प्रीत्या सुरर्षिस्तमपूजयत्सुखं

स्थितोऽवदत्संश्रृणुतामलां गिरम् ॥ ८०

श्रीशुकः—

निगमकल्पतरोर्गलितं फलं

शुकमुखादमृतद्रवसंयुतम् ।

पिबत भागवतं रसमालयं

मुहुरहो रसिका भुवि भावुकाः ॥ ८१

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां

वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।

श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः

सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ ८२

श्रीमद्भागवतं पुराणतिलकं यद्वैष्णवानां धनं

यस्मिन् पारमहंस्यमेवममलं ज्ञानं परं गीयते ।

यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं

तच्छृण्वन् प्रपठन्विचारणपरो भक्त्या विमुच्येन्नरः ॥ ८३

स्वर्गे सत्ये च कैलासे वैकुण्ठे नास्त्ययं रसः ।

अतः पिबन्तु सद्भाग्या मा मा मुञ्चत कर्हिचित् ॥ ८४

सूतः—

एवं ब्रुवाणे सति बादराय[1]णौ
मध्ये सभायां हरिराविरासीत् ।
प्रह्लादबल्युद्धवफाल्गुनादिभि-
र्वृतः सुरर्षिस्तमपूजयच्च तान् ॥ ८५

दृष्ट्वा प्रसन्नं महदासने हरिं
ते चक्रिरे कीर्तनमग्रतस्तदा ।
भवो भवान्या कमलासनस्तु
तत्राग[2]मत्कीर्तनदर्शनाय ॥ ८६

प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्ताऽर्जुनोऽभूत् ।
इन्द्रोऽवादीन्मृदङ्गं जयजयसुकराः कीर्तने ते कुमाराः
यत्राग्रे भाववक्ता सरसरचनया व्यासपुत्रो बभूव ॥ ८७

ननर्त मध्ये त्रिकमेव तत्र
भक्त्यादिकानां नटवत्सुतेजसाम् ।
अलौकिकं कीर्तनमेतदीक्ष्य
हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ८८

मत्तो वरं [3]भाववृताद्वृणुध्वं
प्रीतः कथाकीर्तनतोऽस्मि साम्प्रतम् ।

---

1 णे 2 मन् 3 भागवता

श्रुत्वेति तद्वाक्यमतिप्रसन्नाः
प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ८९

नगाह्गाथासु च सर्वभक्तै-
रेभिस्त्वया भाव्य[1]मिति प्रयत्नात् ।
मनोरथोऽयं परिपूरणीय-
स्तथेति चोक्त्वान्तरधीयताच्युतः ॥ ९०

ततोऽनमत्तच्चरणेषु नारद-
स्तथा शुकादीनपि तापसांश्च ।
अथ प्रहृष्टाः परिनष्टमोहाः
सर्वे ययुः पीतकथामृतास्ते ॥ ९१

भक्तिः सुताभ्यां सह रक्षिता सा
शास्त्रे स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवना-
च्चित्तं समायाति हि वैष्णवानाम् ॥ ९२

दारिद्र्यदुःखज्वरदाहितानां
मायापिशाचीपरिमर्दितानाम् ।
संसारसिन्धौ परिपातितानां
क्षेमाय वै भागवतं प्रगर्जति ॥ ९३

1 मति

शौनकः—

शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः ।
सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयं त्विमम् ॥ ९४

सूतः—

आकृष्णनिर्गमात् त्रिंशद्वर्षाधिकगते कलौ ।
नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९५

परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ।
शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९६

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षगते सति ।
ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९७

इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयानघ ।
कलौ भागवती वार्ता भवरोगविनाशिनी ॥ ९८

कृष्णप्रियं सकलकल्मषनाशनं च
मुक्त्यैकहेतुरिह भक्तिविलासकारि ।
सन्तः कथानकमिदं पिबतादरेण
लोके हि तीर्थपरिशीलनसेवया किम् ॥ ९९

स्वपुरुष[1]मपि वीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।
परिहर भगवत्कथासु मत्ता-
न्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १००

1 मभि

असारे संसारे विषयविष[1]भङ्गाकुलधियः
क्षणार्धं क्षेमार्थं पिबत शुकगाथातुलसुधाम् ।
किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितपथे
परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०१

[2]रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा ।
कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०२

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं
सपदि निगदितं ते शास्त्रपुञ्जं विलोक्य ।
जगति शुककथातो निर्मलं नास्ति किञ्चि-
त्पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०३

एतां यो नियततया शृणोति भक्त्या
यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते
याथार्थ्यान्न हि भुवने किमप्यसाध्यम् ॥ १०४

इति श्रीपद्मपुराणे उत्तरखण्डे श्रीभागवतमाहात्म्ये षष्ठोऽध्यायः

॥ समाप्तमिदं श्रीमद्भागवतमाहात्म्यम् ॥

---

1 सङ्ग 2 रहः

श्रीमद्भागवताख्यपुराणरत्नान्तर्गतद्वादशस्कन्धानां

# ॥ अध्यायार्थसंग्रहश्लोकाः ॥

## ॥ प्रथमस्कन्धे ॥

शास्त्रौघसारश्श्रीकृष्णकृत्यं सृष्ट्यादिकेळयः ।
अवतारकथाः कृष्णवृत्तयो धर्मरक्षणम् ॥ १

तदेवं प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ।
द्वितीये तूत्तरं सूतश्चतुर्णामाहतेष्वथ ॥ २

अवतारकथाप्रश्ने तृतीये तूत्तराभिधा ।
पुरुषाद्यवतारोक्त्या तत्तच्चारित्रवर्णनैः ॥ ३

तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते ।
व्यासस्यापरितोषस्तु तपः प्रवचनादिभिः ॥ ४

पञ्चमे सर्वधर्मेभ्यो हरिकीर्तनगौरवम् ।
व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ ५

व्यासस्य प्रत्ययार्थं हि षष्ठे प्राग्जन्मसम्भवम् ।
स्वभाग्यं नारदः प्राह कृष्णसङ्कीर्तनोद्भवम् ॥ ६

अथ भागवतश्रोतुर्जन्म वक्तुं परीक्षितः ।
सुप्तबालवधाद्द्रौणेर्दण्डस्सप्तम उच्यते ॥ ७

अष्टमे कुपितद्रौणेरस्त्राद्रक्षा परीक्षितः ।
श्रीकृष्णसंस्तुतिः कुन्त्या राज्ञश्शोकश्च कीर्त्यते ॥ ८

युधिष्ठिराय भीष्मेण सर्वधर्मनिरूपणम् ।
श्रीकृष्णसंस्तुतिर्मुक्तिर्नवमे तस्य वर्ण्यते ॥ ९

दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ।
स्त्रीभिस्संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥ १०

एकादशे रतिस्सम्यग्यादवेन्द्रस्य वर्ण्यते ।
आनर्तैस्स्तूयमानस्य पुरीं निर्विश्य बन्धुभिः ॥ ११

पूर्वोक्तं यत्प्रसङ्गाद्यद्रौणिदण्डादिविस्तरात् ।
द्वादशे तु तथैवाथ परीक्षिज्जन्म वर्ण्यते ॥ १२

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे ।
उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महापथम् ॥ १३

चतुर्दशे त्वरिष्टानि दृष्ट्वा राजा विशङ्कितः ।
अशृणोदर्जुनात्कृष्ण तिरोधानमितीर्यते ॥ १४

कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति ।
आरुरोह नृपस्स्वर्गमिति पञ्चदशेऽब्रवीत् ॥ १५

ततश्च षोडशे भूमिधर्मयोः कलिखिन्नयोः ।
संवादो वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ १६

ततस्सप्तदशे राज्ञः कलेर्निग्रह उच्यते ।

तस्यैवं वीर्यभाजोऽपि वैराग्यं वक्ष्यतेऽद्भुतम् ॥ १७
राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ।
सचानुग्रहएवास्य जातो वैराग्यमावहन् ॥ १८
प्रायोपविष्टे गङ्गायां राज्ञि योगिजनावृते ।
शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ १९

॥ द्वितीयस्कन्धे ॥

तत्र तु प्रथमेऽध्याये कीर्तनश्रवणादिभिः ।
स्थविष्ठे भगवद्रूपे मनसो धारणोच्यते ॥ १

द्वितीये तु ततस्स्थूलधारणातो जितं मनः ।
सर्वसाक्षिणि सर्वेशे विष्णौ धार्यमितीर्यते ॥ २

दृश्यालम्बनरूपैव मुक्तावैराजधारणा ।
इहोच्यते तु तच्चाद्या सर्वान्तर्यामिधारणा ॥ ३

तृतीये विष्णुभक्तेस्तु वैशिष्ट्यं शृण्वतो मुनेः ।
भक्त्युद्रेकेण तत्कर्म श्रवणादर ईर्यते ॥ ४

तुर्ये परीक्षिता पृष्टं सृष्ट्यादि हरिचेष्टितम् ।
शुकेन ब्रह्मतत्पुत्रसंवादेनोपवर्ण्यते ॥ ५

पञ्चमे नारदेनाथ पृष्टः सृष्ट्यादि वक्त्यजः ।
हरेर्लीलाविराट्सृष्टिं कालकर्मादिशक्तिभिः ॥ ६

षष्ठे विराड्विभूतिश्च प्रोक्ताध्यात्मादिभेदतः ।

दृढीकृतं तु पूर्वोक्तं सर्वं पुरुषसूक्ततः ॥ ७

उच्यन्ते सप्तमे लीलावतारा ब्रह्मणोदिताः ।
नारदाय तु तत्कर्मप्रयोजनगुणैस्सह ॥ ८

अष्टमे देहसम्बन्धमाक्षिपन्नीशजीवयोः ।
बहून् परीक्षिदापृच्छत्पुराणार्थान् बुभुत्सितान् ॥ ९

राजप्रश्नोत्तरं वक्तुं ब्रह्मणे हरिणोदितम् ।
कथयामास नवमे शुको भागवतं पुनः ॥ १०

ततो भागवतव्याख्याद्वारैव दशमे स्फुटम् ।
राजप्रश्नोत्तरं वक्तुमारेभे बादरायणिः ॥ ११

॥ तृतीयस्कन्धे ॥

तत्र तु प्रथमाध्याये बन्धून् हित्वा गतायुषः ।
निर्गतस्योद्धवेनादौ संवादः क्षत्तुरुच्यते ॥ १

द्वितीये कृष्णविश्लेषादनुशोचन्नथोद्धवः ।
क्षेत्रे बालचरित्राणि कृष्णस्यावर्णयच्छ्वसन् ॥ २

तृतीये मधुरामेत्य व्रजात्कंसवधादिकम् ।
यत्कृतं द्वारकायां च कृष्णेन तदवर्णयत् ॥ ३

चतुर्थे बन्धुनिधनं श्रुत्वा तज्ज्ञानलब्धये ।
उद्धवस्योपदेशेन क्षत्ता मैत्रेयमागतम् ॥ ४

पञ्चमे भगवल्लीलां क्षत्त्रा पृष्टो महामुनिः ।

प्रोवाच महदादीनां सर्गं तैश्च हरेस्स्तुतिम् ॥ ५

उक्तश्चतुर्भिरध्यायैः क्षत्त्रा मैत्रेय सङ्गमः ।
संवादस्तु तयोस्स्कन्धद्वयेनाथ निगद्यते ॥ ६

कौषारवं पर्यपृच्छद्गङ्गाद्वारे कृतक्रियम् ।
विदुरः कृष्णनिर्दिष्टं मुकुन्दं मनसा गतः ॥ ७

षष्ठे तैरीश्वराविष्टैस्सृष्टिमाह विराट्तनोः ।
अधिदैवादिभेदं च तत्रैव भगवत्कृतम् ॥ ८

सप्तमे संशयच्छेदि प्रतिनन्द्य मुनेर्वचः ।
पुनः क्षत्त्रा कृता नानाप्रश्नास्सम्यगुदीरिताः ॥ ९

अष्टमे समभूद्ब्रह्मा नाभेस्तु जलशायिनः ।
तमजानन् जले विभ्यत्तपसा तोषयद्धरिम् ॥ १०

नवमे तपसा तुष्टं दृष्ट्वा नारायणं त्वजः ।
अस्तौदेकार्णवे सीदन् लोकसर्गचिकीर्षया ॥ ११

दशमे कालसम्प्रश्नं प्रतिवक्तुं तदुद्भवः ।
प्राकृतादिविभागेन सर्गस्तु दशधोच्यते ॥ १२

अथत्वेकादशे कालः परमाण्वादिलक्षणैः ।
युगमन्वन्तरादिभ्यः कल्पमानादि वर्ण्यते ॥ १३

द्वादशे तु कुमारादि मनस्सर्गोह्यमैथुनात् ।
कायद्वैधेन यौनस्तु मनुसर्गोऽनुवर्ण्यते ॥ १४

त्रयोदशे सिसृक्षायां मनोराकस्मिकाप्लुते ।
धरामुद्धर्तुमुद्भूतात्क्रोडाद्दैत्यानुसूदनम् ॥ १५

चतुर्दशे निदानं तु तद्वधे वक्तुमुच्यते ।
सन्ध्यायां कश्यपाद्गर्भसम्भवः कामतोऽदितेः ॥ १६

हतप्रभैस्सुरैः पृष्टः प्राह पञ्चदशे विधिः ।
तद्बीजविप्रशापादि वैकुण्ठे विष्णुभृत्ययोः ॥ १७

हरिणा सान्त्वितैर्विप्रैरनुतप्तैस्तु षोडशे ।
तयोरसुरभावेऽपि कृतोऽनुग्रह ईर्यते ॥ १८

ततस्सप्तदशे जन्म तयोर्लोकभयङ्करम् ।
हिरण्याक्षप्रभावश्च वर्ण्यते दिग्जयेऽद्भुतम् ॥ १९

अष्टादशे हिरण्याक्षधराधर्तृवराहयोः ।
निर्विशेषं महायुद्धं देवरक्षा निरूप्यते ॥ २०

ऊनविंशे विरिञ्च्यादिप्रार्थितेन महामृधे ।
वराहेण हिरण्याक्षवधश्श्लाघ्योऽनुवर्ण्यते ॥ २१

विंशे वराहजन्मादिव्यवधानादथादितः ।
सर्गोऽनुस्मर्यते वक्तुमन्वयं प्रस्तुतं मनोः ॥ २२

एकविंशे तपोविद्यातोषितेन तु विष्णुना ।
कर्दमस्य मनोः पुत्र्या विवाहघटनोच्यते ॥ २३

द्वाविंशे कर्दमायादाद्यथादिष्टं हि विष्णुना ।

मनुर्दुहितरं देवहूतिमित्युपवर्ण्यते ॥ २४

त्रयोदशे तपोयोगनिर्मिते सर्वसम्पदि ।
विमाने कामगे चित्रा तयो रीतिर्निरूप्यते ॥ २५

चतुर्विंशे ततो जन्म कपिलस्याह तत्पितुः ।
प्रव्रज्यां तमनुज्ञाप्य ऋणत्रयविमोक्षतः ॥ २६

पञ्चविंशे जनन्या तु पृष्टो बन्धविमोचनम् ।
आदावाह परं भक्तिलक्षणं कपिलस्सुतः ॥ २७

षड्विंशे पुंप्रकृत्योस्तु विवेकायोपवर्ण्यते ।
सांख्येन सर्वभावानां जन्मलक्षणभेदतः ॥ २८

धाता पुत्राय यत्प्रोक्तं क्षत्रे मित्रासुतेन यत् ।
मात्रे सांख्यं तदध्यात्मं प्राधान्येनाह तत्त्ववित् ॥ २९

सप्तविंशे ततस्सम्यग्बहुसाधनयोगतः ।
पुंप्रकृत्योर्विवेकेन मोक्षरीतिर्निरूप्यते ॥ ३०

अष्टाविंशे ततोऽष्टाङ्गयोगेशध्यानशोभिना ।
सर्वोपाधिविनिर्मुक्तस्वरूपज्ञानमीर्यते ॥ ३१

भक्तिं सङ्क्षेपतः प्रोच्य सांख्यमाख्याय विस्तृतम् ।
अथाह वैष्णवं योगमष्टाङ्गं कपिलो हरिः ॥ ३२

एकोनत्रिंशके भक्तियोगस्तु बहुधोच्यते ।
कालस्य च बलं घोरसंसृतेश्च विरक्तये ॥ ३३

त्रिंशे तु कायकान्तादिलालनाकुलचेतसाम् ।
कामिनां तामसी पापादधोगतिरुदीर्यते ॥ ३४

एकत्रिंशे विमिश्रैस्तु पुण्यपापैरिहान्तरा ।
मनुष्ययोनिसम्प्राप्तिर्वर्ण्यते राजसी गतिः ॥ ३५

द्वात्रिंशे सात्त्विकैर्धर्मैरूर्ध्वा गतिरुदीर्यते ।
तत्त्वज्ञानविहीनस्य ततश्च पुनरागतिः ॥ ३६

त्रयस्त्रिंशे तु तस्यैव कपिलस्योपदेशतः ।
ज्ञानभावेन तन्मातुर्जीवन्मुक्तिरुदीर्यते ॥ ३७

॥ चतुर्थस्कन्धे ॥

तत्र तु प्रथमाध्याये मनुकन्यान्वयाः पृथक् ।
वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवा हरेः ॥ १

द्वितीये प्रथमाध्यायोपक्षिप्तभवदक्षयोः ।
विद्वेषे वर्ण्यते हेतुर्विश्वसृड्यज्ञसम्भवः ॥ २

तृतीये तु सती तात यज्ञोत्सवदिदृक्षया ।
गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ ३

चतुर्थे तु पतिं हित्वा गता पित्रावमानिता ।
रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥ ४

पञ्चमे तु सती देहत्यागमाकर्ण्य शङ्करः ।
वीरभद्रं रुषोत्पाद्य तेन दक्षमजीघनत् ॥ ५

षष्ठे तु देवसङ्घेन सह गत्वा भवं विधिः ।
सान्त्वयामास दक्षादिजीविताद्यर्थमादरात् ॥ ६

सप्तमे विष्णुरुद्भूतस्स्तुतो दक्षभवादिभिः ।
यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते ॥ ७

मनुकन्यान्वये प्राप्ता दक्षयज्ञकथोदिता ।
मनुपुत्रान्वये प्राप्ता ध्रुवचर्याथ पञ्चभिः ॥ ८

अष्टमे गुरुदारोक्तिरोषमत्सरतः पुरात् ।
निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः ॥ ९

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्माद्वरान् ध्रुवः ।
प्रत्यागत्याकरोद्राज्यं पित्रा दत्तमितीर्यते ॥ १०

दशमे भ्रातृहन्तॄणां यक्षाणामकरोद्वधम् ।
एकएवालकाङ्गत्वेत्यस्य विक्रम ईर्यते ॥ ११

एकादशे तु यक्षाणां दक्षं दृष्ट्वा मनुस्स्वयम् ।
आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥ १२

द्वादशे धनदेनाभिनन्दितः पुरमागतः ।
यज्ञैरिष्ट्वा हरेस्स्थानमारुरोहेति कीर्त्यते ॥ १३

एवं पञ्चभिरध्यायैर्ध्रुवचर्यानुवर्णिता ।
अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते ॥ १४

तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये ।

अङ्गो वेनपिता पुत्रक्रौर्याद्गतइतीर्यते ॥ १५

चतुर्दशे तु दुष्पुत्रभयादङ्गे गते द्विजैः ।
अभिषिक्तस्य वेनस्य रोषात्तैर्वध उच्यते ॥ १६

ततः पञ्चदशे विप्रैर्मदनाद्वेनबाहुतः ।
जातस्य तु पृथोरुक्तमभिषेकार्हणादिकम् ॥ १७

षोडशे सर्वलोकेशैस्सत्कृतं भार्यया युतम् ।
मुनिप्रयुक्तास्सूताद्यास्तुवन्ति स्मेति वर्ण्यते ॥ १८

ततस्सप्तदशे लोके क्षुधः प्रशमयन् पृथुः ।
ग्रस्तबीजां महीं हन्तुं यत्तो भीत्या तया स्तुतः ॥ १९

आलोलतुलसीमालमारूढविनतासुतम् ।
ज्योतिरिन्दीवरश्याममाविरस्तु ममाग्रतः ॥ २०

अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः ।
पृथ्व्यादिभिस्तु क्रमशस्सा दुग्धेति निरूप्यते ॥ २१

ऊनविंशेऽश्वमेधाङ्गहयापहरणात्पृथोः ।
इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते ॥ २२

विंशे तु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम् ।
वरदानप्रसङ्गेन प्रीतिश्चान्योन्यमीर्यते ॥ २३

एकविंशे तु पृथुना प्रजानामनुशासनम् ।
महासत्रे सुरादीनां महासदसि वर्ण्यते ॥ २४

द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात् ।
सनत्कुमारो भगवानुपादिशदितीर्यते ॥ २५

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः ।
विमानमधिरुह्याथ वैकुण्ठगतिरीर्यते ॥ २६

एकादशभिरध्यायैः पृथोश्चरितमीरितम् ।
प्रचेतसामथाष्टाभिस्तन्मध्ये पञ्चभिः पितुः ॥ २७

चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः ।
प्रचेतसां जनिस्तेभ्यो रुद्रगीतं च वर्ण्यते ॥ २८

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी ।
प्राचीनबर्हिषेऽध्यात्मं परोक्षेणाह पञ्चभिः ॥ २९

पुरञ्जनकथाव्याजात्पञ्चविंशे तु नारदः ।
आत्मनो बुद्धिसङ्गेन विविधामाह संसृतिम् ॥ ३०

प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः ।
पुरञ्जनकथाकूटं प्राह प्राचीनबर्हिषे ॥ ३१

षड्विंशे मृगयाव्याजात्स्वप्नजागरणोक्तिभिः ।
सद्बुद्धित्यागयोगाभ्यां संसृतिस्सा प्रपञ्च्यते ॥ ३२

सप्तविंशे प्रियापुत्राद्यासक्त्या विस्मृतात्मनः ।
कालकन्याद्युपाख्यानैर्जरारोगाद्युदीर्यते ॥ ३३

अष्टाविंशे तु वैदर्भ्या ध्यानेन स्त्रीविचिन्तया ।

स्त्रीत्वं प्राप्तस्य दैवेन कदाचिन्मुक्तिरुच्यते ॥ ३४

ऊनत्रिंशे परोक्षार्थव्याख्यानेनोपसंहृतम् ।
स्त्रीसङ्गतो भवस्त्वीशसङ्गान्मुक्तिरुदीर्यते ॥ ३५

प्रसङ्गात्पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः ।
वर्ण्यते च पुनर्द्वाभ्यां प्रस्तुतं च प्रचेतसाम् ॥ ३६

तत्र त्रिंशे तपस्तुष्टाद्देवाल्लब्धवरास्ततः ।
आगत्य वार्क्षीमुद्वाह्य राज्यं चक्रुरितीर्यते ॥ ३७

एकत्रिंशे सुते दक्षे धुरं न्यस्य प्रचेतसः ।
नारदोक्तेन मार्गेण गता मुक्तिमितीर्यते ॥ ३८

## ॥ पञ्चमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये ज्ञानिनो राज्यनिर्वृतिः ।
पुनश्च ज्ञाननिष्ठेति प्रियव्रतकथाद्भुताः ॥ १

वंशं प्रियव्रतस्यापि निबोध नृपसत्तम ।
यो नारदादात्मविद्यामधिगम्य पुनर्महीम् ॥ २

भुक्त्वा विभज्य पुत्रेभ्य ऐश्वर्यं समगात्पदम् ।
द्वितीये प्रोक्तमाग्नीध्रचरितं स्त्रैणसम्मतम् ॥ ३
पत्न्यां हि पूर्वचित्त्यां यो नाभिमुख्यानजीजनत् ॥ ३॥

अस्मिन् वंशे प्रसिद्धोऽयमाग्नीध्रस्त्रैणपुङ्गवः ।
विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥ ४॥

तृतीये चरितं नाभेः परं मङ्गलमीर्यते ।
यस्य यज्ञे प्रतीतस्सन् पुत्रोऽभूदृषभो हरिः ॥ ५॥

चतुर्थादि त्रिभिः प्रोक्तमृषभस्येहितं महत् ।
लोकार्थं येन सत्कर्म नैष्कर्म्यं च प्रदर्शितम् ॥ ६॥

चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ।
यस्य राज्ये जनस्सर्वस्सन्तोषामृतनिर्वृतः ॥ ७॥

पञ्चमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् ।
उक्तं पारमहंस्यं च तस्य द्वन्द्वातितिक्षया ॥ ८॥

षष्ठे लीनाभिमानस्य देहत्यागक्रमाभिधा ।
प्रदहन्तं दवाग्निं यः पश्यन्नपि न पश्यति ॥ ९॥

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ।
अष्टभिर्भरताख्यानमितः प्रस्तूयते मृतम् ॥ १०॥

सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ।
आरब्धकर्मनिर्वाणो हरिक्षेत्रेऽभजद्धरिम् ॥ ११॥

अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ।
एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥ १२॥

कृपयापि कृतस्सङ्गः पतनायैव योगिनः ।
इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ १३॥

पितुःप्राप्तात्मविज्ञानो भरतो मृगतां गतः ।
प्रारब्धकर्मवेगेन तदन्ते जडविप्रताम् ॥ १४॥

नवमे जडविप्रत्वे तस्य रागाद्यभावतः ।
भद्रकाळीपशुत्वेऽपि निर्विकारत्वमीर्यते ॥ १५॥
दशमे क्षिपता राज्ञा शिबिकां स्वां वहन् मुनिः ।
स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ १६॥
एवं भूताविकारित्वमज्ञसर्वज्ञयोस्समम् ।
इति सर्वज्ञतासिद्ध्यै रहूगणकथेरणम् ॥ १७॥
एकादशेऽथ सम्पृष्टो रहूगणमहीभृता ।
उपादिशत्परं ज्ञानं स योगीति निगद्यते ॥ १८॥
द्वादशे पुनरापृष्टस्सन्देहेन महीभृता ।
स योगी सर्वसन्देहानपानुददितीर्यते ॥ १९॥
त्रयोदशे विरक्ताय वृथा तत्त्वनिरूपणम् ।
इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ २०॥
चतुर्दशे भवारण्यरूपकृत्याकृतिः कृता ।
प्रस्तुते दस्युगोमायुमशकाद्यर्थकल्पनैः ॥ २१॥
एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ।
ततः पञ्चदशे तस्य कीर्त्यन्ते वंशजा नृपाः ॥ २२॥
पूर्वोक्तद्वीपसंख्यादिमानचिह्नस्वरूपतः ।
स्पष्टं प्रवक्तुमारब्धा पञ्चाध्यायी ह्यतःपरम् ॥ २३॥
षोडशेऽधस्तथाचोर्ध्वं परितस्सन्निवेशतः ।
मेरोः स्थितिर्महीकञ्जकर्णिका चोपवर्ण्यते ॥ २४॥

प्रियव्रतचरित्रोक्ता सप्तद्वीपादिकल्पना ।
तद्विशेषविजिज्ञासुः कथान्ते परिपृच्छति ॥ २५॥

ततस्सप्तदशे गङ्गागमनं तच्चतुर्दिशम् ।
इलावृते च रुद्रेण सङ्कर्षणनिषेवनम् ॥ २६॥

अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ।
त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ २७॥

ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ।
सेव्यसेवकभावश्च भारतश्रैष्ठ्यमेव च ॥ २८॥

विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ।
लोकालोकस्थितिं चान्तर्बहिर्भागादिमानतः ॥ २९॥

एवमध्यायविंशत्या भूमर्यादा निरूपिता ।
अतः परं द्युमर्यादापालनं त्रिभिरुच्यते ॥ ३०॥

एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहम् ।
स्वगत्या राशिसञ्चारैर्लोकयात्रा निरूप्यते ॥ ३१॥

द्वाविंशे सोमशुक्रादेस्स्थानमाहोत्तरोत्तरम् ।
तत्तद्गत्यनुसारेण त्विष्टानिष्टे तथा नृणाम् ॥ ३२॥

त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं ततः ।
शिंशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥ ३३॥

एवं त्रिभिर्द्युमर्यादापालनं वर्णितं तथा ।
अधोभुवनमर्यादापालनं त्रिभिरुच्यते ॥ ३४॥

चतुर्विंशे रवेरर्वाक्स्वर्भान्वादिस्थितिः क्रमात् ।
अतलादिबिलस्वर्गमर्यादास्सप्त वर्णिताः ॥ ३५॥
पञ्चविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् ।
सञ्जिहीर्षोरिदं काले यत्र रुद्रसमुद्भवः ॥ ३६॥
षड्विंशे तु ततोऽधस्तान्नरकस्थितिरुच्यते ।
पापिनो यत्र दह्यन्ते यमदूतैर्यथायथम् ॥ ३७॥

॥ षष्ठस्कन्धे ॥

तत्रादौ प्रथमे विष्णोर्दूतैः पातकिमोचनम् ।
तत्पापख्यापनायोक्तं यामैर्धर्मादिलक्षणम् ॥ १
द्वितीये वैष्णवैर्याम्यन्नाममाहात्म्यमद्भुतम् ।
श्रावयित्वा द्विजो विष्णोर्लोकं नीत इतीर्यते ॥ २
तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः ।
सान्त्वयित्वा स्वदूतास्ते वैष्णवैः किङ्करीकृताः ॥ ३
चतुर्थादित्रिभिर्विश्वरूपजन्मविवक्षया ।
प्रचेतस्सुतदक्षस्य वंशस्तावत्प्रतन्यते ॥ ४
पञ्चमे नारदेनाथ वाचःकूटैस्तु नाशितान् ।
सुतानाकर्ण्य दक्षोऽमुं शशापेति निरूप्यते ॥ ५
षष्ठे दक्षेण पृष्टायां कन्या षष्ट्यां प्रकीर्तिताः ।
पृथग्वंशा यतो जातो विश्वरूपोऽदितेस्सुतात् ॥ ६
सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतस्सुरैः ।

गुरुणा सम्परित्यक्तैः पौरोहित्यमथाकरोत् ॥ ७
अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् ।
इन्द्राय प्राह येनेन्द्रो गुप्तो दैत्यानथाजयत् ॥ ८
नवमे विश्वरूपे तु हते शक्रेण कोपतः ।
त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेस्स्तुतिः ॥ ९
दशमे केशवादिष्टो दध्यङ्ङस्थिजवज्रभृत् ।
इन्द्रोऽयुध्यत वृत्रेण सोऽप्यनेन विनिर्जितः ॥ १०
एकादशे तु वृत्रस्य युध्यमानस्य वज्रिणा ।
भक्तिज्ञानबलोदर्काश्चित्रा वाचस्सुवर्णिताः ॥ ११
द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु ।
महेन्द्रेण महायुद्धे वृत्रस्य वध ईर्यते ॥ १२
त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात् ।
चिरं नष्टोऽवितश्शक्रो विष्णुनेति निरूप्यते ॥ १३
वृत्रस्य ज्ञानभक्त्यादिश्रुत्या पृष्टः परीक्षिता ।
श्रोतुमाह चतुर्भिस्तत्प्राग्जन्मचरितान्यतः ॥ १४
चतुर्दशे तु सहसा कृच्छ्रलब्धसुते मृते ।
चित्रकेतोरतिस्नेहादतिशोको निरूप्यते ॥ १५
ततः पञ्चदशे चित्रकेतोश्शोकापनोदनम् ।
कृतं तत्त्वोपदेशेन नारदेनाङ्गिरोयुजा ॥ १६
षोडशे तत्सुतोक्त्यैव विशोकीकृत्य तं नृपम् ।

आदिदेश महाविद्यां नारदश्शेषतोषिणीम् ॥ १७

ततस्सप्तदशे योगमहर्धिं प्राप्य खे चरन् ।
विहस्य गिरिशं शापादुमाया वृत्रतां गतः ॥ १८

त्वष्टुर्वंशमनुक्रम्य सप्रसङ्गं यथाक्रमम् ।
आदित्यानामथान्येषां वंशानाह मुनीश्वरः ॥ १९

अदितेः पञ्चमादीनां पुत्राणामन्वयोक्तितः ।
अष्टादशे दितेर्गर्भे शक्रेण मरुतां भिधा ॥ २०

ऊनविंशेऽत्र यत्प्रोक्तं कश्यपेन दितेर्व्रतम् ।
तदेवं विवृतं लोकहिताय परितोषणम् ॥ २१

॥ सप्तमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये हिरण्यकशिपोस्सुते ।
विष्णुभक्ते विरोधस्तु विप्रशापज ईर्यते ॥ १

द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः ।
तद्धतभ्रातृपुत्रादीनितिहासैरसान्त्वयत् ॥ २

तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ।
आगत्य विस्मितस्तेन संस्तुतस्सवरानदात् ॥ ३

चतुर्थे तु वरान् लब्ध्वा विजित्याखिललोकपान् ।
विष्णुद्वेषेण तान् सर्वान् दैत्येन्द्रस्समपीडयत् ॥ ४

पञ्चमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् ।

घातयन् विषसर्पाद्यैस्सुतं दैत्यो नचाशकत् ॥ ५
षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ।
अनुकम्प्य परं तत्त्वं नारदोक्तमुपादिशत् ॥ ६
सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् ।
प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ ७
अश्रावि नारदादेतन्मया गर्भ इतीरितुम् ।
तत्प्रस्तावकथामाह पद्यैष्षोडशभिस्सुधीः ॥ ८
अष्टमेऽतिरुषा सूनुं निघ्नन् दैत्यो हतस्स्वयम् ।
आविर्भूय नृसिंहेन स च ब्रह्मादिभिस्स्तुतः ॥ ९
अन्तःकृपासुधापूर्णो बहिःक्रोधो नृकेसरी ।
दैत्येन्द्रमरिभावेन भजन्तं स्वमखादयत् ॥ १०
नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः ।
कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ ११
दशमे त्वनुगृह्यामुं भक्तमन्तर्हिते हरौ ।
प्रसङ्गाद्धरिणा रुद्रे कृतोऽनुग्रह ईर्यते ॥ १२
तदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ।
अथ पञ्चभिरध्यायैः कर्मयोगोऽनुवर्ण्यते ॥ १३
एकादशे नृणां धर्मास्साधारण्येन वर्णिताः ।
विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ १४
द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ।

चतुर्णामाश्रमाणां च साधारण्येन कश्चन ॥ १५

त्रयोदशे यतेर्धर्मस्साधकस्योच्यते महान् ।
अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १६

चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते ।
देशकालादिभेदेन पुंसश्श्रेयो विशेषकृत् ॥ १७

ततः पञ्चदशे सर्ववर्णाश्रमनिबन्धनम् ।
सारतस्सङ्ग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ १८

## ॥ अष्टमस्कन्धे ॥

तत्र तु प्रथमे स्वायम्भुवस्स्वारोचिषस्तथा ।
उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥ १

स्वायम्भुवेऽन्तरेऽनन्तदुरन्तगुणवर्णनात् ।
मुदितः परिपप्रच्छ सर्वमन्वन्तरस्थितिम् ॥ २

तुर्ये मन्वन्तरे प्रोक्तं गजेन्द्रस्य विमोक्षणम् ।
द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥ ३

द्वितीये तु गजेन्द्रस्य गजीभिः क्रीडतो जले ।
दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥ ४

तृतीयेन गजेन्द्रेण स्तुतो हरिरुपेत्य तम् ।
समुद्दधार ग्राहाच्च ग्राहं देवलशापतः ॥ ५

चतुर्थे तु तयोर्ग्राहः प्राप गन्धर्वतां पुनः ।

गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ ६
अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ।
स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः ॥ ७
पञ्चमे पञ्चमञ्चाथ षष्ठं चाकथयन्मनुम् ।
विप्रशापाच्च निश्श्रीकैः कृता देवैर्हरिस्तुतिः ॥ ८
षष्ठे पुनस्स्तुतिर्विष्णावाविर्भूते सुरैः कृता ।
तन्मन्त्राच्चासुरैस्साकममृतार्थं महोद्यमः ॥ ९
सप्तमे मन्थनोद्भूतविषभीत्याखिलैर्जनैः ।
स्तुतस्सन् कृपया रुद्रः पपौ विषमितीर्यते ॥ १०
अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ।
धन्वन्तरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥ ११
नवमे मोहितैर्दैत्यैरर्पितेऽमृतभाजने ।
तद्वञ्चनेन देवेभ्योऽमृतं दत्तं तयेर्यते ॥ १२
दशमे मत्सराद्दैत्यैरारब्धे तु मृधे सुरैः ।
दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरिः ॥ १३
तदेवममृतावाप्तिर्नाभक्तानामितीरितम् ।
भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥ १४
एकादशे तु भगवत्कृपयातिबलोद्धतैः ।
अमरैस्समरे दैत्या बलिप्रभृतयो जिताः ॥ १५
द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् ।

भवं सम्मोहयामास हरिः पुनरसान्त्वयत् ॥ १६

अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम् ।
इति वक्तुं महादेवमोहोऽयमिति वर्ण्यते ॥ १७

त्रयोदशे तु वर्ण्यंते सप्तमादीन्यनुक्रमात् ।
मन्वन्तराणि सर्वाणि षड्विधानि पृथक्पृथक् ॥ १८

चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ।
पृथक्कर्माणि वर्ण्यन्ते भगवद्वंशवर्तिनाम् ॥ १९

अत्रेर्यते नवाध्याय्यां वामं वामनचेष्टितम् ।
निग्रहाच्छललो यत्र बलेर्भूयाननुग्रहः ॥ २०

बलिं पञ्चदशे विश्वजिताचार्या ह्ययाजयन् ।
ततोऽसौ स्वर्गमजयद्भयाद्देवा निलिल्यिरे ॥ २१

षोडशे पुत्रनाशेन शोचन्त्या अदितेः पतिः ।
प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥ २२

षोडशे कश्यपोऽदित्या प्रार्थितो लीनपुत्रया ।
महच्छ्रेयस्करं तस्यै पयोव्रतमुपादिशत् ॥ २३

ततस्सप्तदशेऽदित्या कृते तस्मिन् व्रते हरिः ।
तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते ॥ २४

ततस्त्वष्टादशे भूत्वा वामनस्सत्कृतोऽखिलैः ।
बलेर्यज्ञङ्गतस्तेन चोक्तो वृणु वरानिति ॥ २५

ऊनविंशे तु हरिणा याचिते च पदत्रयम् ।

प्रतिश्रुते च बलिना जानन् गुरुरवारयत् ॥ २६

स्तुत्वार्थितो भगवता सबलिस्त्रिपदीमिताम् ।
वामनायोनविंशे क्ष्मां दास्यन् शुक्रेण वार्यते ॥ २७

दातुस्स्तुतिस्स्वयंतुष्टिरित्यादिप्रस्तुतोचितम् ।
वक्तव्यमिति भिक्षूंश्च शिक्षयन्नाह वामनः ॥ २८

विंशे गुरूक्तिमुल्लंघ्य दत्तां क्ष्मां बलिना हरिः ।
प्रतिगृह्याखिलान् लोकान् विश्वरूपो विचक्रमे ॥ २९

विंशेत्वनृतभीतोऽसौ ज्ञात्वापि कपटं हरेः ।
ददौ पृथ्वीं तदा विष्णुस्सहसावर्धताद्भुतम् ॥ ३०

एकविंशे पदापूर्तिमिषेण बलिबन्धनम् ।
विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने ॥ ३१

द्वाविंशे तु प्रसन्नस्सन् प्रस्थाप्य सुतलं बलिम् ।
दत्वा वरान् हरिर्नूनं गत्वा तद्द्वारपोऽभवत् ॥ ३२

समर्पिततनूवित्तनिर्मलाचलभक्तिभिः ।
चलितो बलिना चित्रं स्वमेवार्पयदच्युतः ॥ ३३

त्रयोविंशे बलौ याते सुतलं सपितामहे ।
उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदते हरिः ॥ ३४

चतुर्विंशे भगवतः कथा मत्स्यस्वरूपिणः ।
विविच्यते यतस्सत्यव्रतरक्षा महार्णवे ॥ ३५

तनुं तनुं प्रदर्श्यादौ निजैश्वर्यनिदर्शनात् ।
मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥ ३६

## ॥ नवमस्कन्धे ॥

तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ।
सोमं वंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥ १

द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः ।
करूशकादिपञ्चानां वंशानाह लघुक्रमात् ॥ २

तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः ।
यत्र सौकन्यमाख्यानं रैवतं च महाद्भुतम् ॥ ३

चतुर्थे मनुपुत्रस्य नाभागस्य कथोच्यते ।
तत्सूनोश्चाम्बरीषस्य कृत्या प्रतिहता यतः ॥ ४

पञ्चमे विष्णुचक्रं तु प्रसार्य प्राणसङ्कटात् ।
दुर्वासा विक्षतस्तेन यथा तद्वृत्तमीर्यते ॥ ५

षष्ठारम्भेऽम्बरीषस्य वंशमुक्त्वा ततः परम् ।
षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ ६

तत्र षष्ठे शशादादिमान्धात्रन्तो निरूप्यते ।
प्रसङ्गात्सौभरेराख्या मान्धातृतनयापतेः ॥ ७

मान्धातुरन्वयः प्रोक्तस्सप्तमे यत्र गीयते ।
पुरुकुत्सस्य चाख्यानं हरिश्चन्द्रस्य चोत्तमम् ॥ ८

अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ।
सगरः कपिलाक्षेपाग्निर्दग्धा यस्य सूनवः ॥ ९

नवमेंऽशुमतो वंशः खट्वाङ्गावधि वर्ण्यते ।
गङ्गां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १०

दशमे प्राह खटाङ्गवंशे श्रीरामसम्भवम् ।
तच्चरित्रं च लङ्केशं हत्वाऽयोध्यागमावधि ॥ ११

दशमे रामचरितमाविर्भावपुरस्सरम् ।
शुकेन वर्ण्यते पुण्यमभिषेकोत्सवावधि ॥ १२

ततश्चैकादशेऽयोध्यामावसन्ननुजैसह ।
यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥ १३

रामएकादशे यज्ञैरीजे राष्ट्रेष्ववासयत् ।
कुशादीन् वृत्तिरुदिता प्रजानां राघवस्य च ॥ १४

द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ।
एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥ १५

आरभ्याद्यकुशम्भूपानैक्ष्वाकान् द्वादशेगतान् ।
भविष्यतस्सुमित्रान्तान् बृहद्रथमुखांस्तथा ॥ १६

इक्ष्वाकोरेकेन पुत्रस्य निमेर्वंशस्त्रयोदशे ।
वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १७

त्रयोदशेऽरिषड्वर्गजयीराजान्ववायकृत् ।
ऐक्ष्वाकस्य निमेर्देहान्मथिताज्जनकोऽभवत् ॥ १८

चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद्बुधात् ।
जातश्चैलष्षडूर्वश्यामायुर्मुख्यानजीजनत् ॥ १९

चतुर्दशे त्रिजात्सोमाद्गुरोः पत्न्यां बुधोऽजनि ।
स उपास्तोर्वशीं तज्जस्ससङ्केतं पुरूरवाः ॥ २०

ततः पञ्चदशे गाधिरैळपुत्रान्वयेऽजनि ।
यद्दौहित्रसुतो रामः कार्तवीर्यमहान् रुषा ॥ २१

उक्ताः पञ्चदशे वंशाश्श्रुतायुः प्रमुखोत्थिताः ।
अर्जुनं गाधिजा पौत्रो रामो हन्तेतिचेरितम् ॥ २२

षोडशे चार्जुनसुतैर्जमदग्नौ हते मुहुः ।
रामात् क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ २३

तीर्थान्यटन् प्रसूभ्रातॄन् रामोऽहन् षोडशे नृपान् ।
गाधेः पुत्रोऽभवत्पुत्रस्तद्वंशोऽभूदनेकशः ॥ २४

अयोस्सप्तदशेत्वैळज्येष्ठपुत्रस्य पञ्चसु ।
सुतेषु तत्र वृद्धाधिचतुर्णां वंशवर्णनम् ॥ २५

वंशान् सप्तदशेऽवादीदैळज्येष्ठसुतायुषः ।
पुत्रैरम्भरजिक्षत्रवद्धानेनोभिराहितान् ॥ २६

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ।
यस्य पञ्चसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ २७

आयुषो ज्येष्ठपुत्रस्य नहुषस्याग्रजस्सुतः ।
ययातिः पूरुमकृताष्टादशे नृपमात्मजम् ॥ २८

ऊनविंशे ययातिस्स्वं चेष्टितं नन्वजोपमम् ।
देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ २९

भुक्तभोगामजां ह्यस्यन्नजवद्वृत्तिमात्मनः ।
विडम्बयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ ३०

विंशे पितृप्रसादाप्तराजासनमहोन्नतेः ।
पूरोर्वंशे तु दौष्यन्तेर्भरतस्येर्यते यशः ॥ ३१

एकविंशे तु दौष्यन्तेस्सुतस्यान्वय उच्यते ।
रन्तिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ ३२

एकविंशे भरद्वाजपुत्रमन्युसुतान्वयः ।
वर्ण्यन्ते रन्तिदेवाजमीढाद्या यत्र वंशिनः ॥ ३३

द्वाविंशे तु दिवोदासवंशमुक्त्वाथ वर्णिताः ।
ऋक्षवंशे जरासन्धपार्थदुर्योधनादयः ॥ ३४

दिवोदासात्तु पाञ्चालवंशो द्वाविंश उच्यते ।
वंशान्तरादाजमीढचैद्यमागधकौरवाः ॥ ३५

त्रयोविंशेत्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ।
यदोश्च वंशोऽनुक्रान्तो यावज्ज्यामखसम्भवम् ॥ ३६

त्रयोविंशेऽन्वयानुक्त्वा शुकोनुप्रमुखैः कृतान् ।
ज्यामखावधिमाचख्यौ यदोर्वंशं महत्तरम् ॥ ३७

चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ।
वंशा नानामुखाः प्रोक्ता रामकृष्णोद्भवावधि ॥ ३८

## ॥ दशमस्कन्धे ॥

कृष्णावतारचरितश्रवणामृतनिर्वृतः ।
उक्तानुवादेनौत्सुक्याद्राजा पृच्छति तत्पुनः ॥ १
तत्र तु प्रथमे कंसस्स्वमृत्युं देवकीसुतात् ।
श्रुत्वा भीतोऽवधीत्तस्याष्षड्गर्भानिति वर्ण्यते ॥ २
द्वितीये कंसघाताय देवक्या गर्भगो हरिः ।
ब्रह्मादिभिस्स्तुतस्सा च सान्वितेति निरूप्यते ॥ ३
तृतीये निजरूपेण सम्भूतस्तु हरिस्स्वयम् ।
पितृभ्यां संस्तुतो नीतः पित्रा भीतेन गोकुलम् ॥ ४
चतुर्थे चण्डिकावाक्यमाकर्ण्यातिभयाकुलः ।
दुर्मन्त्र्यभिहितं मेने कंसो बालादिहिंसनम् ॥ ५
पञ्चमे जातकं नन्दस्सूनोः कृत्वा महोत्सवम् ।
गत्वा तु मधुरां प्राप वसुदेवागमोत्सवम् ॥ ६
षष्ठे सख्युर्गिरानन्दो व्रजन् गच्छन् मृतां पथि ।
दृष्ट्वा तु राक्षसीं तस्या मृत्युं श्रुत्वा स विस्मितः ॥ ७
उत्क्षिपन् शकटं व्योम्नि तृणावर्तमधिक्षिपन् ।
दर्शयन्विश्वमास्ये च कृष्णः क्रीडति सप्तमे ॥ ८
अष्टमे नामकर्मास्य बालक्रीडा कुतूहले ।
मृद्भक्षणादियोगे च विश्वरूपं निरूप्यते ॥ ९
विश्वरूपादि बालस्य निशम्याशङ्किनः पितुः ।

नामकृद्गर्गवाक्येन निजं तत्त्वमसूचयत् ॥ १०

नवमे पयउत्सिक्ते गत्वा गोप्यथ तत्कृतम् ।
विलोक्य भाण्डभङ्गादि कृष्णं दाम्ना बबन्ध तम् ॥ ११

तत्तूदराश्रितं विश्वं दृष्ट्वा विस्मितचेतसः ।
बन्धनव्यङ्गुळापूर्ता पूर्णतांसोऽन्वदर्शयत् ॥ १२

दशमेऽपातयद्राजन्नन्तरा यमळार्जुनौ ।
तत्र ताभ्यां च देवाभ्यां कृष्णस्तुत इतीर्यते ॥ १३

एकादशे समागत्य बृन्दावनमथार्भकैः ।
वत्सान्पालयतानेन हतौ वत्सबकासुरौ ॥ १४

द्वादशे तु महासर्पवपुर्धरमघासुरम् ।
वत्सपालगळं क्रुद्धो गळेऽहन्निति वर्ण्यते ॥ १५

महाबकगळक्रीडा केवलस्य न कौतुकम् ।
इतीवाघासुरमुखे ससखः प्राविशद्धरिः ॥ १६

त्रयोदशे हरिर्ब्रह्मा वत्सान्पालांश्च मायया ।
तदा तत्सर्वरूपोऽब्दं कृष्णः पूर्ववदाचरत् ॥ १७

चतुर्दशेऽद्भुतं दृष्ट्वाऽपूर्वागन्तुकनिश्चयम् ।
अनीशः कर्तुमस्तौषीत्कृष्णं ब्रह्मातिमोहितः ॥ १८

ततः पञ्चदशे धेनुपालनं धेनुकार्दनम् ।
काळीयक्ष्वेळतो गोपरक्षणं च निरूप्यते ॥ १९

षोडशे काळियस्योक्तो निग्रहो यमुनाह्रदे ।

तत्पत्नीभिस्स्तुतेनाथ कृष्णेनानुग्रहः पुनः ॥ २०

नागं सप्तदशे नागालयं तं निरयासयत् ।
बन्धूंश्च सखिनश्श्रान्तान् सुप्तांस्तत्र दवादपात् ॥ २१

अष्टादशे ततो ग्रीष्मे वसन्तगुणलक्षिते ।
अघातयद्बलेनालं प्रलम्बं लीलया हरिः ॥ २२

ऊनविंशे निविष्टं तु गोपगोकुलमच्युतः ।
मुञ्जारण्यमरण्याग्नेररक्षत्तन्निपानतः ॥ २३

विंशे प्रावृट्छरच्छोभावर्णनेन वनोचिताः ।
प्रावृट्क्रीडा निरूप्यन्ते गोपरामयुजो हरेः ॥ २४

एकविंशे शरद्रम्यबृन्दावनगते हरौ ।
तद्वेणुस्वनमाकर्ण्य गोपीभिर्गीतमीर्यते ॥ २५

द्वाविंशे गोपकन्यानां वस्त्राहरणलीलया ।
वरदं वा गतः कृष्णो यज्ञशालामितीर्यते ॥ २६

त्रयोविंशे ततो गोपैरन्नयाच्ञापदेशतः ।
तत्पत्न्यनुग्रहात्कृष्णो दीक्षितानन्वतापयत् ॥ २७

चतुर्विंशे महेन्द्रस्य मखं व्यावर्त्य हेतुभिः ।
कृष्णः प्रावर्तयामास गोवर्धनमहोत्सवम् ॥ २८

पञ्चविंशे रुषा शक्रे व्रजनाशाय वर्षति ।
उद्धृत्य गिरिमासारादरक्षद्गोकुलं प्रभुः ॥ २९

षड्विंशे विस्मितान्गोपान् कृष्णस्याद्भुतकर्मभिः ।

नन्दो गर्गोक्तिमाशंक्य तदैश्वर्यमवर्णयत् ॥ ३०
सप्तविंशे तदालक्ष्य कृष्णस्य प्राभवं परम् ।
वर्ण्यते सुरभीन्द्राभ्यामभिषेकमहोत्सवः ॥ ३१
अष्टाविंशे ततो नन्दानयनं वरुणालयात् ।
वैकुण्ठदर्शनं चापि गोपानामनुवर्ण्यते ॥ ३२
ऊनत्रिंशे तु रासार्थमुक्तिप्रत्युक्तयो हरेः ।
गोपीभीरासरम्भे तस्य चान्तर्धिकौतुकम् ॥ ३३
त्रिंशे विरहसन्तप्तगोपीभिः कृष्णमार्गणम् ।
उन्मत्तवन्न नियतं भ्रमतीभिर्वने वने ॥ ३४
एकत्रिंशे निशायां ताः पुनः पुलिनमागताः ।
कृष्णमेवानुगायन्त्यः प्रार्थयन्ते तदागमम् ॥ ३५
द्वात्रिंशे विरहालापविक्लिन्नहृदयो हरिः ।
तत्राविर्भूय गोपीस्तास्सान्त्वयामास मानयन् ॥ ३६
त्रयस्त्रिंशे ततो गोपीमण्डलीमध्यगो हरिः ।
प्रियास्ता रमयामास ह्लादिनी वनकेलिभिः ॥ ३७
चतुस्त्रिंशेऽहिनाग्रस्तं नन्दं हरिरमूमुचत् ।
विद्याधरञ्चाङ्गिरश्शापाच्छङ्खचूडं तथावधीत् ॥ ३८
पञ्चत्रिंशे वनं याते कृष्णे गोकुलयोषितः ।
युग्मश्लोकानुगीतेन निन्युर्दुःखेन वासरान् ॥ ३९
षट्त्रिंशे निहतेऽरिष्टे नारदोक्त्या बलाच्युतौ ।

वसुदेवसुतौ ज्ञात्वा कंसोऽक्रूरं समादिशत् ॥ ४०
सप्तत्रिंशे हते केशिन्यच्युतो भाविकर्मभिः ।
नारदेन स्तुतः क्रीडन् व्योमासुरमथावधीत् ॥ ४१
अष्टत्रिंशे यथाध्यायन्नक्रूरो गोकुलं गतः ।
तथैव रामकृष्णाभ्यां गृहं नीत्वा सुसत्कृतः ॥ ४२
प्रातः केशिवधे वृत्ते द्वादश्यां निर्गते मुनौ ।
ततो व्योमे हतेऽक्रूरस्सायं गोकुलमागमत् ॥ ४३
नवत्रिंशे पुरीं गच्छत्यच्युते गोपिकोक्तयः ।
अक्रूरेणाथ कालिन्द्यां विष्णुलोकस्य दर्शनम् ॥ ४४
चत्वारिंशे ततोऽक्रूरः कृष्णं मत्वेश्वरेश्वरम् ।
प्रणम्य भक्त्या तुष्टाव सगुणागुणभेदतः ॥ ४५
एकचत्वारिंशकेऽहन् रजकं प्रविशन्पुरीम् ।
ततो वरानदात्तुष्टस्सुदाम्नो वायकस्य च ॥ ४६
द्विचत्वारिंशके कुब्जोऽन्नमन्नन्धनुषो भिदा ।
वधस्तद्रक्षिणां कंसारिष्टरङ्गोत्सवानि च ॥ ४७
त्रिचत्वरिंशके हत्वा गजेन्द्रं रामकृष्णयोः ।
रङ्गप्रवेशसौभाग्यं चाणूरेणानुभाषणम् ॥ ४८
चतुश्चत्वारिंशके तु मल्लकंसादिमर्दनम् ।
कंसयोषित आश्वासस्ताभ्यां पित्रोश्च दर्शनम् ॥ ४९
पञ्चचत्वारिंशकेऽथ पितृनन्दादिसान्त्वनम् ।

उग्रसेनाभिषेकश्च गुरौ वासात्पुरागमः ॥ ५०

षट्चत्वारिंशके घोषमुद्धवं प्रेष्य तद्गिरा ।
यशोदानन्दयोश्चक्रे कृष्णश्शोकापनोदनम् ॥ ५१

कामचारं द्विजातिस्सन् परित्यज्यातिसंयतः ।
गुरोर्ज्ञानमनुप्राप्य सख्या गोपीरुपादिशत् ॥ ५२

सप्तचत्वारिंशकेऽथ कृष्णादेशेन गोपिकाः ।
बोधयित्वोद्धवस्तत्रवमनुज्ञाप्यागमत्पुरीम् ॥ ५३

अष्टचत्वारिंशकेऽथ कृष्णः कुब्जामरीरमत् ।
अक्रूरस्य गृहं गत्वा तं गजाह्वयमादिशत् ॥ ५४

सैरन्ध्रिकाममापूर्य पूरयित्वा मनोरथान् ।
अक्रूरस्य ततः कृष्णस्तेन पार्थानसांत्वयत् ॥ ५५

ऊनपञ्चाशत्तमे तु गत्वा क्रूरो गजाह्वयम् ।
राज्ञस्स्वभ्रातृपुत्रेषु बुद्ध्वा वैषम्यमागमत् ॥ ५६

ततः पञ्चाशत्तमे तु जरासन्धभयादिव ।
कारयित्वाम्बुधौ दुर्गं तं निनाय निजं जनम् ॥ ५७

कपटान् कपटेनैव हत्वा दैत्यानयत्नतः ।
अजयत्तं जरासन्धं धर्मेणैव तु धार्मिकम् ॥ ५८

एकपञ्चाशत्तमेऽहन् मुचुकुन्ददृशा हरिः ।
यवनं मुचुकुन्देन स्तुतस्सन्नन्वकम्पत ॥ ५९

यवनेन्द्रसुतात्कालयवनाद्यदुभीषणात् ।

हरिर्हरगिरस्स्वैरं पालनायापलायत ॥ ६०
द्विपञ्चाशत्तमे धावन्भयादिव गतः पुरीम् ।
अन्वमोदत सन्देशं रुक्मिण्या द्विजवर्णितम् ॥ ६१
त्रिपञ्चाशत्तमे गत्वा विदर्भानद्भुते हितः ।
रुक्मिणीमाहरत्कृष्णो मिषतां द्विषतां बलात् ॥ ६२
चतुःपञ्चाशत्तमे तु जित्वा राज्ञो विपक्षगान् ।
रुक्मिणं च विरूप्याथ भैष्म्याः पाणिं पुरोऽग्रहीत् ॥ ६३
पञ्चपञ्चाशत्तमे तु प्रद्युम्नोऽजनि कृष्णतः ।
शम्बरेण हृतस्सोऽथ हत्वा तं कान्तयागमत् ॥ ६४
प्रद्युम्नहानिलाभाद्यैश्शम्बराहरणादिना ।
कुटुम्बिनामपत्यादि सुखदुःखमसूचयत् ॥ ६५
षट्पञ्चाशत्तमे मिथ्याभियोगे मणिमाहरत् ।
कन्यां जाम्बवतः प्राप कृष्णस्सत्राजितस्ततः ॥ ६६
पुत्रादिकामसौख्यस्य निष्ठा मुक्तातिचञ्चलम् ।
अर्थस्यानर्थतामाह स्यमन्ताहरणादिना ॥ ६७
सप्तपञ्चाशत्तमे तु पुनश्शतधनोर्वधे ।
प्राप्तं स्वदुर्यशो मार्ष्टि कृष्णोऽक्रूरागतान्मणेः ॥ ६८
अक्रूरमुररीकृत्य मणेः पात्रमथाच्युतः ।
उपामन्त्र्य तमेकान्ते सरामोऽगाद्गजाह्वयम् ॥ ६९
अष्टपञ्चाशत्तमे तु कृष्णः पञ्चकरेऽग्रहीत् ।

काळिन्दीं मित्रविन्दां च सत्यां भद्रां च लक्ष्मणाम् ॥ ७०
काळिन्दीं निजलाभाय तपः परमुपेयुषीम् ।
उपनेष्यन् प्रियावासमिन्द्रप्रस्थमथागमत् ॥ ७१
ऊनषष्टितमे भौमं हत्वा तेनाहृतो हरिः ।
कन्यास्सहस्रशः प्राप्य पारिजातं ततोऽहरत् ॥ ७२
परिणीय ततस्ताभिस्तन्मनोरथपूरणैः ।
आत्मारामोऽप्यसौ रेमे तद्गृहेषु गृहस्थवत् ॥ ७३
अथ षष्टितमे कृष्णः परिहासेन रुक्मिणीम् ।
कोपयित्वा ततः प्रेम कलहो तामसान्त्वयत् ॥ ७४
रामारामजनानन्दमहोदयविडम्बनैः ।
रुक्मिण्या प्रेमकलहच्छद्मनैश्वर्यमीर्यते ॥ ७५
एकषष्टितमे शौरेः पुत्रपौत्रादिसन्ततिः ।
अनिरुद्धविवाहे च रुक्मिणो रामतो वधः ॥ ७६
अष्टाधिकशतव्यष्टसहस्रस्त्रीसमुद्भवान् ।
कोटिशः पुत्रपौत्रादीन् हरिर्दारैरयोजयत् ॥ ७७
द्वियुक्षष्टितमे प्रोक्तमनिरुद्धस्य रोधनम् ।
कन्यया रममाणस्य बाणेन बहुबाहुना ॥ ७८
त्रियुक्षष्टितमे चाथ बाणयादवसङ्गरे ।
स्तुतिर्ज्वरेणेश्वरेण बाणबाहुभिदो हरेः ॥ ७९
श्रीकृष्णश्श्रीहरं जित्वा बाणबाहूनथाच्छिनत् ।

चतुर्बाहुं विमुञ्चेमं देवदेव दयानिधे ॥ ८०
इति सम्प्रार्थितस्तेन रुद्रेण प्रीतमानसः ।
प्रह्लादाय वरो दत्तः पुरा वध्योऽसुरो मया ॥ ८१
चत्वारोऽस्य भुजाश्छिष्टा भविष्यत्यजरामरः ।
पार्षदोऽयं भवतु ते हरेत्युक्त्वा ससर्ज तम् ॥ ८२
चतुष्षष्टितमे कृष्णो नृगं शापादमोचयत् ॥
ब्रह्मस्वहारिदोषोक्त्या राज्ञो द्रष्टानशिक्षयत् ॥ ८३
विभूतिभोगभाग्यादिमदोद्धतमनोरथान् ।
अन्वशासद्यदून् कृष्णः नृगोद्धारप्रसङ्गतः ॥ ८४
पञ्चषष्टितमे रामश्चक्रे गोकुलमागतः ।
रममाणस्तु गोपीभिः कालिन्द्याः कर्षणं मदात् ॥ ८५
रामस्य चरितं चित्रं कालिन्द्याकर्षणादि यत् ।
पौण्ड्रकान्तादिकृष्णस्य पृथगुक्तं ततः परम् ॥ ८६
षड्यत्रषष्टितमे काशीं गत्वाहन् पौण्ड्रकं हरिः ।
तन्मित्रं च ततो वृत्तं सुदक्षिणमथादिशत् ॥ ८७
सप्तषष्टितमे रामो गिरौ रैवतके मदात् ।
स्वैरं युवतिभिः क्रीडन्नवधीद्द्विविदं बलः ॥ ८८
अष्टषष्टितमे साम्बे निबद्धे कौरवैर्युधि ।
तद्विमोक्षाय रामेण द्विजाह्वयविकर्षणम् ॥ ८९
एकोनसप्ततितमे गार्हस्थ्यं प्रतिमन्दिरम् ।

कृष्णस्य नारदो दृष्ट्वा विस्मितोऽगात्ततस्तुवन् ॥ ९०
ततस्तु सप्ततितमे कृष्णस्याह्निककर्मणि ।
दूतनारदयोः कार्ये मन्त्रिमन्त्रविचारणम् ॥ ९१
जगन्मङ्गळचारित्रमाह्निकं जगदीशितुः ।
नारदेन कचित्किञ्चित् दृष्टमाह यथाक्रमम् ॥ ९२
अथैकसप्ततितमे ह्युद्धवस्य तु मन्त्रतः ।
इन्द्रप्रस्थं गते कृष्णे पार्थानां परमोत्सवः ॥ ९३
राजसूयमिषं कृत्वा भीमदुर्योधनादिषु ।
कलिमुत्पाद्य तद्द्वारा भूभारमहरत्प्रभुः ॥ ९४
ततो द्विसप्ततितमे राज्ञा कार्ये निवेदिते ।
दुर्जयं मागधं बुद्ध्वा भीमेनाघातयद्धरिः ॥ ९५
ततस्त्रिसप्ततितमे मोचयित्वा नृपान् हरिः ।
राजार्हभोगैस्स्वान्देशान् प्रस्थाप्य पुनराहरत् ॥ ९६
अत्युन्नद्धजरासन्धवधात्तद्रुद्धभूपतीन् ।
विमोक्ष्य कृपया कृष्णो निजरूपमदर्शयत् ॥ ९७
चतुर्युक्सप्ततितमे राजसूयक्रियाद्विजैः ।
अग्रपूजाप्रसङ्गेन चैद्यघातादि वर्ण्यते ॥ ९८
राजसूयमुखे हत्वा जरासन्धं तदन्तरे ।
चैद्यं तदन्ते कुर्वन्तं बीजं कलिमिवावपत् ॥ ९९
पञ्चयुक्सप्ततितमे यज्ञावभृथसम्भ्रमः ।

सुयोधनस्य चाक्षान्त्या मानभङ्गो हृशिक्रमात् ॥ १००
ततष्षट्सप्ततितमे वृष्णिसाल्वमहामृधे ।
द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥ १०१
सम्पाद्य धर्मराजस्य राजसूयमहोदयम् ।
निहत्य सौभराजादीनथोपारमदच्युतः ॥ १०२
सप्तयुक्सप्ततितमे नानामायाविचक्षणः ।
कृष्णेनागत्य साल्वस्तु हतस्सौभं च चूर्णितम् ॥ १०३
ततोऽष्टसप्ततितमे दन्तवक्त्रविडूरथौ ।
हत्वा हरिः पुरे रेमे रामस्सूतं ततोऽवधीत् ॥ १०४
ऊनाशीतितमे रामः पल्वलं द्विजतुष्टये ।
निहत्य तीर्थस्नानाद्यैस्सूतहत्यामपानुदत् ॥ १०५
तथाशीतितमे कृष्णश्श्रीदामानं गृहागतम् ।
सम्पूज्यापृच्छदर्थेप्सुं गुरुवासकथां मुदा ॥ १०६
एकाशीतितमे सख्युर्जग्ध्वा पृथुकतण्डुलान् ।
श्रियं निर्मितवानिन्द्रदुर्लभां तु तदाश्रमे ॥ १०७
द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे ।
वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥ १०८
श्रीकामसुहृदे कृष्णः प्रकल्प्येन्द्रपदं भुवि ।
नन्दादिसुहृदानन्द कुरुक्षेत्रं जगाम सः ॥ १०९
त्र्यशीतितम एवं च स्त्रीणां कृष्णकथोत्सवे ।

द्रौपद्यै कृष्णभार्याभिरुक्तास्स्वस्वकरग्रहाः ॥ ११०
चतुर्भिरधिकेशीतितमे मुनिसमागमे ।
वसुदेवमुखोत्साहबन्धुप्रस्थापनादिकम् ॥ १११
पञ्चाशीतितमे रामकृष्णौ सम्प्रार्थितौ स्तुतौ ।
पित्रे ज्ञानमथो मात्रे मृतान्पुत्रानयच्छताम् ॥ ११२
नन्दयित्वा कुरुक्षेत्रे यात्रायां सुहृदो बहून् ।
तत्त्वज्ञानं ततः पित्रोरादिशन्मृतसूनुभिः ॥ ११३
षडशीतितमे दम्भात्सुभद्रामर्जुनोऽहरत् ।
गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् ॥ ११४
पित्रोस्स्वज्ञानमादिश्य सुभद्रामर्जुनाय च ।
जगाम मिथिलां कृष्णस्सभक्तप्रियकृत्ततः ॥ ११५
सप्ताशीतितमे नारायणनारदवादतः ।
वेदैस्स्तुतिर्गुणालम्बा निर्गुणा च तथोच्यते ॥ ११६
अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ।
ततोऽर्वाग्देवभक्तस्तु विभूतिमिति वर्ण्यते ॥ ११७
नवाशीतितमे देवः को महानिति संशये ।
परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥ ११८
मृतपुत्रं समादाय विप्रोऽरोदीद्धरेः पुरः ।
अर्जुनेन प्रतिज्ञातं विप्रपुत्रस्य रक्षणम् ॥ ११९
शिशावदर्शनं प्राप्ते फल्गुनेऽग्निसमीपगे ।

सार्जुनो हरिरानाय्य वैकुण्ठात्तत्सुतार्पणम् ॥ १२०
चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः ।
यदुवंशप्रसूतानामानन्त्यं च सकारणम् ॥ १२१

॥ एकादशस्कन्धे ॥

उक्तैकत्रिंशदध्यायैर्मुक्तिरेकादशे ततः ।
जायते येतिहासाद्यैस्समासव्यासयोगतः ॥ १
नारदो वसुदेवाय समासेन न्यवर्णयत् ।
भगवानुद्धवायाथ विस्तरेणोपपत्तिभिः ॥ २
तत्र तु प्रथमेऽध्याये यदुवंशस्य संक्षयः ।
उपक्षिप्तो विरागाय मौसल्यव्यपदेशतः ॥ ३
प्रवर्तितः परानन्दकृष्णक्रीडानुवर्णिता ।
तन्निवृत्त्या परानन्दपदारोहोनुवर्ण्यते ॥ ४
द्वितीये निमिजायन्तसंवादेनाह नारदः ।
धर्मान्भागवतान्भक्त्या वसुदेवाय पृच्छते ॥ ५
मायातत्तरणब्रह्मकर्मप्रश्नचतुष्टये ।
तृतीये तूत्तरं दत्तमार्षभैर्मुनिभिः पृथक् ॥ ६
चतुर्थेत्ववतारेहाप्रश्नस्योत्तरमुक्तवान् ।
जयन्तिनन्दनो नाम्ना द्रमिळो नवसत्तमः ॥ ७
पञ्चमे भक्तिहीनानां का निष्ठा को युगे युगे ।
विष्णोः पूजाविधिः प्रश्नद्वयस्योत्तरमुच्यते ॥ ८

षष्ठे ब्रह्मादिभिस्स्तुत्वा गन्तुं विज्ञापितं हरिं ।
उद्धवः प्रार्थयामास स्वधाम नय मामिति ॥ ९

सप्तमे तूद्धवज्ञानसिद्ध्यै पृष्टस्स्वयं हरिः ।
अवधूतेतिहासोक्तगुरुष्वष्टाववर्णयत् ॥ १०

अष्टमेऽजगरादिभ्यो नवभ्यश्शिक्षितं हरिः ।
अवधूतगिरा प्राह विवेकायोद्धवं प्रति ॥ ११

नवमे कुररादिभ्यो देहतश्चोपशिक्षितम् ।
श्रुत्वा यदुः कृतार्थोऽभूदिति कृष्णेन वर्णितम् ॥ १२

चतुर्विंशतिगुर्वाख्यो लब्धसम्भावना भुवः ।
उद्धवस्यात्मतत्वाप्त्यै साधनोक्तिपरेरिता ॥ १३

दशमे देहसम्बन्धात् संसृतिर्नात्मनस्स्मृता ।
इत्येतद्वर्णयामास मतान्तरनिवारतः ॥ १४

एकादशे तु बद्धानां मुक्तानामपि लक्षणम् ।
साधूनां च तथा भक्तेर्लक्षणं हरिणेरितम् ॥ १५

द्वादशे साधुसङ्गस्य महिमा वर्णितः पुरा ।
कर्मानुष्ठानतत्त्यागव्यवस्था च ततः परम् ॥ १६

त्रयोदशेऽथ सत्त्वस्य वृद्ध्याविद्योदयक्रमः ।
हंसेतिहासतश्चित्तगुणविश्लेषवर्णनम् ॥ १७

चतुर्दशे परं श्रेयो भक्तिरेव नचेतरत् ।
इत्येतद्वर्ण्यते ध्यानयोगश्च सहसा धनैः ॥ १८

ततः पञ्चदशे प्रोक्तास्सिद्धयो धारणानुगाः ।
श्रीविष्णुपदसम्प्राप्तावन्तरायतया मताः ॥ १९
षोडशे तु हरेराविर्भावयुक्ता विभूतयः ।
ज्ञानवीर्यप्रभावादिविशेषेणोपवर्णिताः ॥ २०
अन्तस्तद्योगतापत्त्यै विभूत्यादिनिरूपणम् ॥ २०॥
ततस्सप्तदशे पृष्टे स्वधर्मे भक्तिलक्षणे ।
हंसोक्तं धर्ममन्वाह ब्रह्मचारिगृहस्थयोः ॥ २१॥
अष्टादशेऽवदद्धर्मं वनस्थयतिगोचरम् ।
अधिकारविशेषेण विशेषं चापि तद्गतम् ॥ २२॥
ज्ञानादेर्निर्णयः पूर्वं कृतो ह्याश्रमधर्मतः ।
एकोनविंशतितमे ज्ञानादेस्त्याग उच्यते ॥ २३॥
ज्ञानिनो वर्ण्यते कर्माभाव एकोनविंशके ।
युक्तितर्कस्वरूपाभ्यां नष्टज्ञानस्य सर्वदा ॥ २४॥
विंशे योगत्रयं प्रोक्तं भक्तिज्ञानक्रियात्मकम् ।
गुणदोषव्यवस्थार्थमधिकारिविभागतः ॥ २५॥
एकविंशे क्रियाज्ञानभक्तिष्वनधिकारिणाम् ।
कामिनां द्रव्यदेशादिगुणदोषाः प्रपञ्चिताः ॥ २६॥
द्वाविंशे तत्वसंख्यानामविरोधविधोच्यते ।
पुंप्रकृत्योर्विवेकश्च जन्ममृत्युविधादि च ॥ २७॥
त्रयोविंशे तिरस्कारसहनोपाय ईर्यते ।

भिक्षुगीताप्रकारेण मनसस्संयमो धिया ॥ २८॥
चतुर्विंशे तु सांख्येन मनोमोहो निवार्यते ।
आत्मनस्सर्वभावानामागमापायचिन्तया ॥ २९॥
स्वपदद्वन्द्वभक्तानामद्वन्द्वत्वाय संयमम् ।
चित्रस्योक्त्वा पुनः कृष्णस्सांख्यमत्राह तत्कृते ॥ ३०॥
पञ्चविंशे स्वनैर्गुण्यप्रतिपत्त्यै निरूप्यते ।
चित्तप्रभवसत्त्वादिगुणवृत्तिरनेकधा ॥ ३१॥
षड्विंशे योगनिष्ठाया विघातो दुष्टसङ्गतः ।
साधुसङ्गेन तन्निष्ठा परा काष्ठेति वर्ण्यते ॥ ३२॥
योगिनो योगविभ्रंशस्सङ्गतस्सम्भवेदिति ।
सर्वथा तन्निवृत्त्यर्थमैळगीतं वितन्यते ॥ ३३॥
सप्तविंशे क्रियायोगस्सद्यश्चित्तप्रसादतः ।
सर्वकामाप्तिहेतुश्च साङ्गः प्रोक्तस्समासतः ॥ ३४॥
रागाद्याकुलचित्तानां कुतो सङ्गादिसम्भवः ।
इति कृष्णार्चनं भद्रमनुस्मृत्यानुपृच्छति ॥ ३५॥
अष्टाविंशे तु यः पूर्वं विस्तरेणोपवर्णितः ।
ज्ञानयोगः पुनश्चासौ समाहृत्य निरूप्यते ॥ ३६॥
ऊनत्रिंशे तु यः पूर्वं विस्तरेण निरूपितः ।
भक्तियोगस्तमेवाह स्वभक्ताय समासतः ॥ ३७॥
अतिक्लेशमिवालक्ष्य योगे सङ्गैकसंसदि ।
सुखोपायं पुनः कृष्णमुद्धवः परिपृच्छति ॥ ३८॥

त्रिंशे तु प्रागुपक्षिप्तमौसलच्छलतो हरिः ।
स्वधाम गन्तुमन्विच्छन् सञ्जहार निजं कुलम् ॥ ३९॥

एकत्रिंशे स्वकं धाम जगाम भगवानितः ।
तमेवानुययुः प्रीत्या वसुदेवादयस्ततः ॥ ४०॥

देवान्यदून्विधायादौ भूयो देवान् विधाय तान् ।
श्रीकृष्णस्वेच्छया धाम स्वतन्वैव समाविशत् ॥ ४१॥

॥ द्वादशस्कन्धे ॥

उक्तस्त्रयोदशाध्यायैर्द्वादशेत्वाश्रयस्ततः ।
अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरस्ततः ॥ १

उक्तो लयावधित्वेन प्राकृतात्यन्तिके लये ।
अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ २

तत्राद्यैःषड्भिरध्यायैश्शुकः प्राह परीक्षिते ।
शेषैस्तत्राखिलान्याह सूतः पृष्टोऽथ सत्रिभिः ॥ ३

स्वाश्रयश्रवणे कार्यो न विलम्बो मनीषिणा ।
इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥ ४

तत्र तु प्रथमे भाविमागधान्वयभूमिपान् ।
कलिप्रभावतः प्राह सङ्करादिमलीमसान् ॥ ५

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः ।
अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ ६

तृतीये भूमिगीतैस्तु राज्यदोषादि वर्ण्यते ।

कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नतिः ॥ ७
चतुर्थे च चतुर्थोक्ता लया नैमित्तिकादयः ।
तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ ८
पञ्चमे तु समासेन परब्रह्मोपदेशतः ।
राज्ञस्तक्षकसन्देशान्मृत्युभीतिनिवारणम् ॥ ९
षष्ठे परीक्षितो मोक्षस्सर्वहोमादि तत्सुतात् ।
वेदशाखाविभागोक्तौ त्रिवेदव्यासवर्णनम् ॥ १०
सप्तमे धर्मविस्तारः पुराणव्यसनं ततः ।
पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ ११
अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ।
कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १२
नवमे भगवन्मायादिदृक्षोर्दर्शनं मुहुः ।
मायाशिशोर्दयाऽब्धौ च मुनेर्निर्वेशनिर्गमैः ॥ १३
दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् ।
तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥ १४
एकादशे तु पूजार्थं महापुरुषवर्णनम् ।
रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक्पृथक् ॥ १५
द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः ।
प्रथमस्कन्धमारभ्य प्राधान्येन समासतः ॥ १६
त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् ।
दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १७

# ॥ सिद्धान्तचन्द्रिका ॥

## ॥ श्रीमद्भागवतस्य सर्वपुराणोत्कृष्टत्वप्रतिपादकपीठिका ॥

श्रीमन्निखिलोपनिषत्प्रतिपाद्यपरमाद्वैतसिद्धान्तप्रतिपादकत्वात्-अपरिमेयप्रमेयविस्तृताखिलवेदजातविभजनपूर्वकतया निखिलपुराणादिसद्ग्रन्थप्रवर्तकैश्श्रीवेदव्यासभट्टारकैर्भगवद्गुणवर्णनैकप्रधानतया प्रणीतत्वात् - मात्स्यगारुडाद्यनेकसद्ग्रन्थेष्वत्युत्कृष्टतया प्रतिपादितत्वात् गीता-सहस्रनाम -रामायणादिशब्दानां निरुपपदानां यथाक्रमं भगवद्गीता-विष्णुसहस्रनाम - वाल्मीकिरामायणवाचकत्वं यथा तद्वदस्यापि भागवतशब्दस्य - निरुपपदस्य श्रीविष्णुभागवतवाचकतया निखिलास्मच्छिष्टजनैरङ्गीकृतत्वात् - निखिललोकाभिवन्द्यमुनिगणसंसेव्य - मानानवद्यपदारविन्देन शुकमहर्षिणाप्यधीतत्वात् - मोक्षशास्त्रमिदमिति निश्चयबुध्या - तेनैव महर्षिणा मुमुक्षवे परीक्षिते बोधितत्वादित्याद्यनेकहेतुभिश्श्रीमद्भागवतस्यास्य सर्वपुराणोत्कृष्टत्वं निखिलोपनिषत्तुल्यत्वं च स्पष्टतरमेव दृश्यते, तथाप्यस्मद्विमतानुवर्तिभिरनाघ्रातवेदगन्धैरसम्प्रदायाधीतपुराणग्रन्थैरनालोचिताखिलसद्ग्रन्थकथासम्बन्धैः स्वार्थास्वार्थविवेचनाभावप्रयुक्तात्यसूयान्धैः कैश्चिन्मन्दैरिदं भागवताख्यं मोक्षशास्त्रं, केनचिदाधुनिकेन बोपदेवाख्येन रचितमित्यभाणि, तत्पदवीमनुसृत्यैवान्येऽपि केचिच्छुकमहर्षिणा प्रणीतमित्यवोचन् ॥ तथैवा-

परे व्यासापरनाम्ना केन चिदाधुनिकेन प्रणीतमित्यूचुः, कैश्चिद्व्यासेनोपपुराणेषु सप्तदशपुराणत्वेन कृतमिति चाभिहितमेवं विविधविरुद्धासद्धेतुवादकलुषितैस्स्वेच्छानुवर्तनैकायत्तशाक्तजनालर्कभाषितैः श्रीमद्व्यासमहर्षिप्रणीतश्रीमद्भागवतकाञ्चनशैलस्य न कापि क्षतिरिति निश्चित्य तदीयपूर्वपक्षोपपादनपूर्वकतया सहेतुभिरकुटिलार्थकैर्वचनैस्साधकबाधकनिरूपणपूर्वकतया परमसिद्धान्तस्सङ्ग्रहेण प्रकाश्यते—तथा हि—

॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतप्रथमकक्ष्या ॥

हेमाद्रिनामकस्य राज्ञस्सभास्थानपण्डितेष्वग्रगण्यः पण्डितजनसार्वभौमो बोपदेवः, गोपालमतावलम्बिनस्तत्प्रभोः प्रीणनाय, तदाज्ञानुसारेणैतत्पुराणरत्नं भगवद्व्यासप्रणीतत्वेन तन्नाम्ना विरचय्य, तस्मै राज्ञे समर्पितवान्, ततस्स भूपतिर्बहुभिः पण्डितैस्साकमामूलाग्रं तदवलोक्य, विविधविचित्रभगवद्भागवतकथाविशेषैस्तत्तद्वृट्टीयवर्णनोचितपदगुम्भनैः निखिलवेदान्तप्रतिपाद्यपरमतत्त्वार्थापादकवाक्यरचनादिभिश्चातिरमणीयमिदमिति निश्चित्य, तादृग्विधसर्वोत्कृष्टग्रन्थस्यैतस्यैव, भागवताख्यपुराणरत्नत्वेन लोके प्रतीतिर्यथा स्यात्तथा कर्तुं तस्मान्मातृकास्थानापन्नात्पुत्रिकास्थानापन्नाबह्वीर्मूलग्रन्थवितती‌र्निष्पाद्य, स्वाश्रितपण्डितजनसमुदयद्वारा, तद्व्याख्यानादीन् कारयित्वा, लोके तद्ग्रन्थसन्ततीः प्रख्यापितवानितीयं कथा तत्तद्विविधजनपरम्पराप्रवचनमूलतो लोके प्रख्यातैव श्रूयते, नचैवंविधजनपरम्पराप्रवचनश्रवणमात्रेणैव तत्पुराणरत्नमाधुनिकपण्डितवर्यविरचितमिति वा-

च्यं, तस्मिन्नेवार्थे सन्दिहानैस्तव्द्याकर्तृभिश्श्रीधराचार्यादिभिः प्रथम-स्कन्धीय प्रथमश्लोक व्याख्यानावसाने (भागवतं नामान्यदित्यपि न शङ्कनीयं) इति लिखितं, तल्लिङ्गादेवान्यद्भागवतं वर्तत इति द्योत्यते ॥ तस्मादेतस्य विष्णुभागवतस्य बोपदेवकर्तृकत्वे, न कामप्यनुपपत्तिं पश्यामः ॥

॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतद्वितीयकक्ष्या ॥

श्रीमद्व्यासमहर्षिप्रणीतेषु, भारत, स्कान्द, विष्णुपुराणादि-सद्ग्रन्थप्रतिपादितश्लोकबृन्देष्वनुसृतद्राक्षापाक, कैशिकीवृत्त्यादीनां च, श्रीमद्भागवतग्रन्थप्रतिपादितश्लोकसमुदायेष्वनुसृतनारिकेळपाक, आर-भटीवृत्त्यादीनां च, तेजस्तिमिरयोरिव परस्परवैधर्म्यसद्भावः, अक्षि-मद्भिर्विचक्षणैः प्रत्यक्षेणासकृदुररीकृत एव भवति, यथैव लेखन, पठन, सम्भाषण, सञ्चलनालङ्करणादिष्वभ्यस्तफक्किकाविरुद्धफक्किका-वत्त्वं न लोके यत्र कुत्रापि वा साधारणतया दृष्टम्, तथैव कृतिरचना-दिष्वप्यभ्यस्तशय्यापाकवृत्त्यादीनामविरुद्धशय्यादिमत्वमेव तत्तत्कवि-जनवर्यविरचितग्रन्थेषु दृश्यते, तस्मात्पूर्वोक्तक्रमेणात्रापि भागवते, भारतादिग्रन्थप्रतिपादितश्लोकेष्वनुसृतशय्यापाकवृत्त्यादीनां विरुद्धश-य्यादिसद्भावादेतन्न भगव्द्यासकृतमिति वक्तुं सुशकम् ॥

अत्रोपपादितपाक, वृत्ति, शय्या, रीत्यादीनाम्, लक्षणस्वरूप-निरूपकप्रमाणवचनानि ॥

॥ प्रतापरुद्रीये, काव्यप्रकरणे - "अथ कैशिक्यादीनां स्वरूपं निरूप्यते ॥

अत्यर्थसुकुमारार्थसन्दर्भा कैशिकी मता ।
अत्युद्धतार्थसन्दर्भा वृत्तिरारभटी मता ॥
ईषन्मृद्वर्थसन्दर्भा भारतीवृत्तिरिष्यते ।
ईषत्प्रौढार्थसन्दर्भा सात्त्वती वृत्तिरिष्यते ॥

अत्र

अत्यन्तसुकुमारौ द्वौ शृङ्गारकरुणौ मतौ ।
अत्युद्धतरसौ रौद्रबीभत्सौ परिकीर्तितौ ॥
हास्यशान्ताद्भुताः किञ्चित्सुकुमाराः प्रकीर्तिताः ।
ईषत्प्रौढौ समाख्यातौ रसौ वीरभयानकौ ॥"

यत्र शृङ्गारकरुणावतिकोमळेन सन्दर्भेण वर्ण्येते, तत्र कैशिकी, यत्र रौद्रबीभत्सावतिप्रौढेन सन्दर्भेण प्रतिपाद्येते, तत्रारभटी, यत्र नातिसुकुमारा हास्यशान्ताद्भुताः, नातिसुकुमारेण सन्दर्भेण प्रतिपाद्यन्ते तत्र भारती, यत्र नातिप्रौढौ वीरभयानकावनतिप्रौढेन सन्दर्भेण निर्वाह्येते, तत्र भारतीति निश्चयः, एतासामुदाहरणश्लोकाः ग्रन्थविस्तरभयान्नात्र प्रकाशिताः ॥

अपि च तस्मिन्नेव ग्रन्थे—

मध्यमारभटीत्वन्या तथा मध्यमकैशिकी ।
वृत्ती इमे उभे सर्वरससाधारणे मते ॥

मृद्वर्थेऽप्यनतिप्रौढबन्धा मध्यमकैशिकी ।
मध्यमारभटी प्रौढेऽप्यर्थेनातिमृदुक्रमा ॥

वैदर्भ्यादिरीतीनां शब्दगुणाश्रितानामर्थविशेषनिरपेक्षतया केवलसन्दर्भसौकुमार्यप्रौढत्वमात्रविषयत्वात् कैशिक्यादिभ्यो भेदः ॥

अथ रीतीनां स्वरूपं निरूप्यते—

रीतिर्नामगुणाश्लिष्टा पदसङ्घाटनामता ॥
सा त्रिविधा—वैदर्भी, गौडी, पाञ्चाली चेति ॥

बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ।
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ॥

ओजः कान्तिगुणोपेता गौडीया रीतिरिष्यते ।
पाञ्चालरीति वैदर्भी गौडी रीत्युभयात्मिका ॥

अथ शय्यानिरूपणम्—

या पदानां परान्योन्यमैत्री शय्येति कथ्यते ॥

अथ पाकनिरूपणम्—

अर्थगम्भीरिमा पाकस्स द्विधा हृदयङ्गमः ।
द्राक्षपाको नारिकेळपाकश्च प्रस्फुटान्तरौ ॥
द्राक्षापाकस्स कथितो बहिरन्तस्स्फुरद्रसः ।
सनारिकेळपाकस्स्यादन्तर्गूढरसोदयः ॥

एवमेव वस्त्वलङ्कारप्रतीतावपि द्रष्टव्यम्, पाकान्तराणि यथा-

सम्भवमूह्यानि, ग्रन्थविस्तरभयादेव न तद्विषयविवेचना तु, विशेषतः प्रतिपादिता ॥

॥ पूर्वपक्षिभिश्शाक्तैरुदाहृततृतीयकक्ष्या ॥

श्रीमन्मत्स्यपुराण, गरुडपुराण, स्कन्दपुराणादिभ्यः, श्रीमच्छ्रीधराचार्य, विजयध्वजाचार्य, वीरराघवाचार्य, प्रभृतिभिर्व्याख्याकर्तृभिः, प्रथमस्कन्धीयप्रथमश्लोकव्याख्यानावसरेऽभ्युदाहृतश्लोकेषु प्रोष्ठपदानक्षत्रे पूर्णिमायां च, स्वर्णरचितसिंहानाधिरोपितस्य यथोक्तलक्षणलक्षितस्य समग्रस्य, श्रीविष्णुभागवतस्य सत्कुलीनाय श्रोत्रियाय दानेन, दातुर्मोक्षप्राप्तिरूपफलमुपदिष्टम् तथा हि—

॥ मत्स्यपुराणे - पुराणदानप्रस्तावे ॥

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥ इत्यादि

अत्र प्रतिपादितरीत्या, हेमसिंहस्य च श्रीभागवतग्रन्थस्य च न कोऽपि सम्बन्धः, प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया तथोक्तमिति वक्तव्यं, तथासति, प्रतिपाद्यस्य भगवतो नारायणस्य गरुडवाहनवत्वं हि लोके प्रसिद्धतया सद्ग्रन्थेषु दृश्यते, न सिंहवाहनवत्वं, नाप्यन्यवाहनवत्वं च प्रतिपादितं भवति, अपि तु भगवत्याश्श्रीदेव्यास्तु सिंहवाहनवत्वं तु बहुषु सद्ग्रन्थेषु, प्रसिद्धतया श्रूयते, न च

नृसिंहरूपिणो भगवतो रूपे ॥ नृत्वमपहाय सिंहत्वमात्रमवलम्ब्य तदुपर्यारोपितश्रीमद्भागवतग्रन्थदाने दातुः मोक्षप्राप्तिर्भवतीति वाच्यं, प्रतिपाद्यस्यैव शिरसि तत्प्रतिपादकमधिष्ठाप्य, प्रददतः पुरुषस्य मोक्षावाप्तिर्भवतीति वक्तुस्स्वोपानहौ स्वशिरसि धर्तव्याविति प्रलपतः पुरुषस्येव मौर्ख्यं परं सर्वजनविदितं भवेदिति निश्चिनुमः ॥

॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतचतुर्थकक्ष्या ॥

श्रीमद्भागवतव्याख्यानकर्तृभिः पूर्वोक्तश्रीधराचार्यादिभिस्तस्मिन्नेव प्रथमस्कन्धीयप्रथमश्लोकव्याख्यानावसरे मात्स्यादिपुराणेभ्यः उद्धृतश्लोकेषु श्रीमद्भागवतस्वरूपनिरूपकत्वेनोपपादितलक्षणानि सर्वाण्यपि, न विष्णुभागवतपराणि भवितुमर्हन्ति, अपि तु देवीभागवतपराण्येवेति ब्रूमः, तथा हि श्रीधराचार्यवर्यादिभिरुदाहृतवचनानि ॥

॥ यथोक्तं मत्स्यपुराणे - पुराणदानप्रस्तावे ॥

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद्भागवतमिष्यते ॥
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रोष्ठपद्यां पौर्णमास्यां स याति परमं पदम् ॥
अष्टादशसहस्रं तत्पुराणं परिकीर्तितम् ।

स्कान्दे च—

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ॥

गायत्र्या च समारम्भस्तद्वै भागवतं विदुः ॥ इति

किं च पद्मपुराणे अम्बरीषं प्रति गौतमवचनम्—

अम्बरीषशुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम् ॥ इति

गरुडे च—

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।
गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः ॥
पुराणानां साररूपस्साक्षाद्भागवतोदितः ।
द्वादशस्कन्धसंयुक्तश्शतविच्छेदसंयुतः ॥
ग्रन्थोऽष्टादशसाहस्रश्श्रीमद्भागवताभिधः ॥ इति

किं च महामायारूपिण्या भगवत्याः प्रसादबलादेव विच्छिन्नशिरसश्श्रीमहाविष्णोर्हयग्रीवत्वसम्प्राप्तेर्देवीभागवते कण्ठोक्त्या प्रतिपादितत्वात्, श्रीमद्धयग्रीवावतारस्य विनष्टनिखिलमहाविद्यानामकश्रीविद्योद्धरणैकप्रयोजनत्वात्, तथैव श्रीहयग्रीवपरब्रह्ममूर्तिना, अगस्त्यमहर्षये ह्युपदिष्टदेवीप्रतिपादकनिखिलागमग्रन्थजातस्य हयग्रीवब्रह्मविद्येतिशाक्तैस्सर्वत्राप्यभ्युपेतत्वात्, श्रीविष्णुभागवते वा, अन्यत्र पुराणान्तरे वा, तथानुक्तत्वाच्च. एवमत्र प्रतिपादितयुक्तिचतुष्टयेन, अत्रत्यहयग्रीवब्रह्मविद्येतिविशेषणं च, गायत्र्यादिसमारम्भ इत्यादि विशेषणानि च, न विष्णुभागवतपराणीत्यत्र न काममप्यनुपपत्तिं पश्यामः अत्रोपपादितयुक्तिचतुष्टयस्योपष्टम्भकतयात्र प्रमाणवचनानि साकल्येन प्रतिपाद्यन्ते—

॥ श्रीमदगस्त्यऋषिप्रणीतपञ्चदशीभाष्ये ॥

हयग्रीवाल्लब्ध्वा सकलममुमाद्यं मनुवरं
कृता टीका तस्यानुमतविधिनाऽगस्त्यमुनिना ।
कलातत्त्वोद्भासिन्यपरिमितभाग्योदयकरी
त्रयीसारादुद्धृत्य च सदुपकाराय सुधिया ॥

॥ किञ्च - ललितासहस्रनामसूत्तरपीठिकायाम् ॥

हयाननमहाबुद्धे सर्वशास्त्रविशारद ।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥

इत्यादि एतच्छ्लोकद्वयार्थपर्यालोचनया, श्रीहयग्रीवपरब्रह्ममूर्तिनैव महाविद्याह्यगस्त्यायोपदिष्टेत्यर्थस्तु स्पष्टतरं प्रतिपादितो भवति ॥ किञ्च

॥ हयग्रीवावतारकारणविवेचनापादकप्रमाणवचनानि ॥

॥ देवीभागवते, प्रथमस्कन्धे, पञ्चमाध्याये ॥

ऋषयः—

सूतास्माकं मनःकामं मग्नं संशयसागरे ।
त्वयोक्तं महदाश्चर्यं जगद्विस्मयकारकम् ॥
यन्मूर्धा माधवस्यापि गतो देहान्महात्मनः ।
हयग्रीवस्तदा जातस्सर्वकर्ता जनार्दनः ॥
वेदोऽपि सौति यं देवं देवास्सर्वे यदाश्रयाः ।
आदिदेवो जगन्नाथस्सर्वकारणकारणम् ॥
तस्यापि वदनं छिन्नं दैवयोगात्कथं तथा ।
तत्सर्वं कथयाशु त्वं विस्तरेण महात्मनः ॥

सूतः—

श्रृण्वन्तु मुनयस्सर्वे सावधानास्समन्ततः ।
चरितं देवदेवस्य विष्णोः परमतेजसः ॥
कदाचिद्दारुणं युद्धं कृत्वा देवस्सनातनः ।
दशवर्षसहस्राणि परिश्रान्तो जनार्दनः ॥
समदेशे शुभे स्थाने कृत्वा पद्मासने विभुः ।
दत्वा भारं धनुष्कोट्यां निद्रामाप रमापतिः ॥
श्रान्तत्वाद्दैवयोगाच्च जातस्तत्रातिनिद्रितः ॥

इत्यारभ्य

सूतः—

इति श्रुत्वा वचस्तेषां त्वष्टा चातित्वरान्वितः ।
वाजिशीर्षं च कर्ताशु क्षणाच्च सुरसन्निधौ ॥
विष्णोश्शरीरे झडिति योजिते वाजिमस्तके ।
हयग्रीवो हरिर्जातो महामायाप्रसादतः ॥
स्वल्पेनैव तु कालेन दानवस्स हि दर्पितः ॥
निहतस्तरसा सङ्ख्ये देवानां रिपुरोजसा ।
यइदं शुभमाख्यानं श्रृण्वन्ति भुवि मानवाः ॥
सर्वदुःखविनिर्मुक्तास्ते भवन्ति न संशयः ।
महामायाचरित्रं च पवित्रं पापनाशनम् ।
पठतां श्रृण्वतां चैव सर्वसम्पत्तिदायकम् ॥

इत्यन्तेन, महाविष्णोर्देव्यनुग्रहवशाद्धयग्रीवत्वसम्प्राप्तिरुक्ता ॥

## ॥ पूर्वपक्षिभिश्शाक्तैरुदाहृतपञ्चमकक्ष्या ॥

श्रीमद्व्यासमहर्षिर्निखिललोकानुद्धर्तुकामः, ऋग्यजुस्सामाथर्वणाख्यतया वेदान् संविभज्य, पैल, वैशम्पायन, प्रमुखशिष्यानध्यापयामास, ततः परं शिष्यप्रशिष्यद्वारा विविधशाखाभेदेनानुत्सन्ना एवाद्यापि लोके वेदाः प्रवर्तन्त इत्यर्थस्सर्वजनविदित एव हि दृश्यते, किं च, तथैव समहर्षिर्निखिलवेदार्थधारणासमर्थानां जनानामुपकृतये, अष्टादशमहापुराणानि रचयामास, ततः परमपि तत्तत्पुराणानभ्युदितार्थेषु केषुचित्सन्दिग्धविषयेषु, सन्दिहानानां जनानां सन्देहनिवर्तनैकपरत्वेनाष्टादशोपपुराणान्यप्यरचयत्, एवं सति, तत्र तत्र पुराणेषूदाहृतपुराणानुक्रमणिकायां, भागवतस्य पञ्चमपुराणत्वेन व्यवहारस्तु सर्वेष्वपि पुराणेषु प्रतिपादितो भवति, किं च, उपपुराणेषु सप्तदशपुराणस्य भागवतमिति नाम च सम्यग्व्यवहृतं सहृरीदृश्यते, अपि च, निखिलपुराणप्रणयनान्तरकाल एव व्यासेन श्रीमहाभारतग्रन्थः प्रणीत इत्यर्थः स्पष्टतरं सर्वैरपि श्रुतचरएव भवति, ततःपरमेव श्रीमद्भागवतप्रणयनं तु निर्वृत्तमित्यत्रैव भागवतग्रन्थे कण्ठोक्त्या प्रतिपादितं हि श्रूयते ॥

### ॥ श्रीमद्भागवते - चतुर्थाध्याये ॥

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेयएवं भवेदिह ॥
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ इति

तस्मात्पूर्वोक्तप्रकारेण निखिलमहापुराणोपपुराणप्रणयनोत्तर-कालप्रणीतभारतग्रन्थात्परतोविरचितस्यैतस्य भागवतग्रन्थस्य, अष्टादशमहापुराणोपपुराणान्तःपातित्वं न कदापि सङ्गच्छत इति निश्चिनुमः ॥

## ॥ प्रथमकक्ष्याखण्डनम् ॥

श्री बोपदेवाख्यपण्डितजनसार्वभौमेनैतद्विष्णुभागवतं विरचितमिति कैश्चिदनाप्तैराप्तजनवदवभासमानैरनालोचिताखिलशास्त्रप्रमेयप्रमाणैर्बोपदेवप्रणीताखिलग्रन्थजातनिर्णयपरिज्ञानहीनैस्स्वेच्छामनुवर्तमानैः पण्डितंमन्यमानैर्निखिलशिष्टजनावगीतासदाचारानुवर्तनासादिताहोपुरुषिकाधरीकृतस्वजनाभिमानैर्मानविहीनैश्शाक्तजनैः पौनःपुन्येन प्रलपितवाग्जालं सर्वमप्यस्मदभिहितसद्युक्तिझंझानिलैर्विधूतं सद्विशीर्णविविधावयवं भवतीति विद्वच्छिखामणयो विदां कुर्वन्तु ॥

तथा हि, प्रथमकक्ष्याप्रतिपादितयावद्विषयपर्यालोचनया हेमाद्रिनामकप्रभोः प्रीणनाय बोपदेवेनेदं पुराणरत्नं विरचितमित्यर्थः प्रतिपादितो भवति, तत्र युक्तिस्तु पामरजनपरम्पराप्रवचनप्रयुक्तदुराशङ्कापनोदनाय श्रीधराचार्येण प्रथमस्कन्धप्रथमश्लोकव्याख्यानावसरे प्रतिपादितं (भागवतं नामान्यदित्यपि नशङ्कनीयमिति) वाक्यं, न किमप्यन्यत्सयुक्तिकं वचनं पूर्वपक्षिणा तत्र वा अन्यत्र वा समुपपादितं, तस्मात्तत्प्रलपितवचनानामुपमर्दकतया अत्र प्रतिपाद्यमानामेनां दुर्जनकपोलचपेटिकानाम्नीं सिद्धान्तस्वरूपप्रतिपादिकां प्रक्रियां, प्रवर्तयिष्यामः ॥

तथा हि, कदाचिद्धेमाद्रिनामकविद्वत्प्रभुणा मुहूर्तद्वितयेनास्माकं भागवताध्यायसङ्ग्रहार्थः ग्रन्थरूपेण कथयितुं समर्थः को वास्त्यस्मिन् सदसीति, मध्येसभं पृष्टे, बोपदेवनामककविरधिसभं, परश्वः कथयिष्यामीति प्रतिज्ञाय स्वप्रतिज्ञातार्थं निर्वोढुं श्रीमद्भागवतकथानुक्रमणिकाप्रतिपादकत्वेन भागवताध्यायसाराख्यं ग्रन्थं विरचय्य, तस्मै हेमाद्रिभूपतये समर्पयत् ॥

॥ यस्यायमाद्यश्श्लोकः ॥

श्रीमद्भागवताध्यायसारोऽत्र निरूप्यते ।
विदुषा बोपदेवेन मन्त्रिहेमाद्रितुष्टये ॥ इति

किं च, ततः परमतिसङ्ग्रहरूपेणाभिवर्णितभागवताध्यायसाराख्यग्रन्थावलोकनेनापरितुष्टस्य प्रभोः प्रीणनाय, तदाज्ञां पुरस्कृत्य सएव बोपदेवः, भक्तिमुक्ताफल, भक्तिलहरीनामकग्रन्थद्वयं श्लोकरूपेणाकथयत्, ततस्तत्कृतिद्वयरचनयातिपरितुष्टेन हेमाद्रिणात्यादरात्सबोपदेवस्सम्मानितोऽभूदितीयं कथा तत्कृतग्रन्थजाते भक्तिमुक्ताफलाख्यग्रन्थसंख्यानिर्णायकवचनलेखनावसरे स्पष्टतरं प्रकाशितम् ॥

॥ तथा हि-मुक्ताफलाख्य ग्रन्थटीकावसाने
श्रीबोपदेवकृत ग्रन्थसङ्ख्यानिर्णायकप्रमाणवचनम् ॥

यस्य व्याकरणे वरेण्यघटनाख्याताः प्रबन्धा दश
प्रख्याता नरवैद्यकेषु तिथिभिर्व्याख्यास्तथा षोडश ।
साहित्ये त्रयएव भागवततत्त्वोक्तौ त्रयस्तस्य तु
ह्यन्तर्वाणिशिखामणेरिह गुणाः के के न लोकोत्तराः ? ॥

किं च, तत्रैव, श्रीमद्भागवतग्रन्थो द्वाविंशतिवारमधीत इति श्रीमद्भागवतमाहात्म्यानुवर्णनपूर्वकतया श्रीवेदव्यासस्तुतिरपि तेनैव बोपदेवेन प्रतिपादिता, न तद्विषयप्रतिपादकानि वचनानि ग्रन्थविस्तरभयादत्र प्रकाशितानि ॥

एवं च सति पूर्वोक्तप्रकारेण बोपदेवप्रणीतभागवताध्यायसारभक्तिमुक्ताफल, भक्तिलहर्याख्यग्रन्थत्रयप्रतिपादितार्थापरिज्ञातृभिः पामरैः प्रलपितवचनजालस्यानादरणीयतां च श्रीमद्भागवताध्यायप्रतिपादितार्थं सङ्ग्रहरूपेण परिजिज्ञासोर्हेमाद्रेः प्रीणनाय द्रव्यलोभाद्भागवताध्यायार्थसङ्ग्रहप्रणयने प्रवृत्तस्य बोपदेवस्य भागवतग्रन्थप्रणेतृत्वं न कदापि वक्तुं, श्रोतुमूहितुं च शक्यत इत्यर्थं च विद्वच्छिखामणयस्स्पष्टतरं विजानन्तुतराम् ॥ किं च, श्रीमद्भागवतव्याख्याकर्तृणामग्रगण्येन श्रीधराचार्यवर्येण स्वव्याख्यानप्रणयनावसरे तत्तदध्यायानामादावध्यायार्थप्रतिपादकत्वेन सङ्ग्रहश्लोकाः प्रतिपादिताः, ते च श्लोकास्साकल्येनात्रोपोद्घातप्रकरणे यथाक्रमं प्रकाशिताः ॥ न तादृशाध्यायार्थप्रतिपादकश्लोकप्रणयनमात्रेण भागवतग्रन्थः श्रीधराचार्येण प्रणीत इति केनाप्युच्यते ॥ तथैव बोपदेवेन कविनाप्येकस्मिन्नहनि स्वपौरुषसाधनाय प्रणीतश्रीमद्भागवताध्यायार्थसङ्ग्रहाख्यग्रन्थरचनामात्रेण निखिलोपनिषत्प्रतिपाद्य परमतत्त्वावबोधकभागवतमेव तेन प्रणीतमिति नोद्घुष्यते, स यदि कोशागारे तदध्यक्षेण निष्कपरिगणनाय भृतिं दत्वा नियुक्तभटान् विलोक्य कोशागाराधिपतीनित्येव प्रलपेदिति निश्चिनुमः, तस्माद्बोपदेवाख्यः कश्चन साधारणकविः,

भागवतार्थसङ्ग्रहणैकायत्तमनाः, तदर्थसङ्ग्रहप्रतिपादकग्रन्थप्रणयनेनैव विश्रुतकीर्तिः जयदेव, नारायणतीर्थादिषु भागवतप्रतिपादितार्थाप्रतिपादकग्रन्थकर्तृष्वयमप्यन्तर्भवितुमर्हतीत्यर्थस्सर्वैरपि पण्डितवरैः करतलामलकवद्विज्ञेय एव भवति, तस्मात्पूर्वपक्षिणा चक्षुषी निमील्यप्रलपितपूर्वपक्षस्तून्मूलित एवेति दिक् ॥

## ॥ द्वितीयकक्ष्याखण्डनम् ॥

श्रीमन्महाभारतादिषु प्रतिपादितश्लोकेषु पाक, शय्या, वृत्तीनां च, श्रीमन्महाभागवतप्रतिपादितशय्यादीनां च, तेजस्तिमिरयोरिव परस्परविभिन्नधर्मवत्त्वं, करतलामलकवत्सर्वजनविदितमिति यदुक्तं तत्र विचारयामः ॥

तथा हि, श्रीमद्भगवानादिनारायणो निखिललोकोत्तरणाय स्वांशतो व्यासमहर्षिरूपेणावतीर्य निखिलवेदजातं चतुर्धा विभज्य स्वशिष्येभ्यः पैलादिभ्य उपदिदेश, ततः परं निखिलपुराणान्यपि परिष्कृत्य लोके प्रवर्तयामास तथैव वेदलक्षणप्रतिपादकशिक्षादिकं च, ब्रह्मसूत्रादिकं च, प्रणिनाय, सर्वेषामप्यपरोक्षसाक्षात्काररूपमोक्षप्राप्तिनिरोधकाज्ञानान्धकारपटलं दूरीचकार ॥

तत्राखिललोकोत्तरणसाधनीभूतानन्तग्रन्थनिर्माणालङ्करणापरिमेयमहिम्ना भगवता व्यासेन तत्तदधिकारिजनानुकूलतया विविधविचित्रकथाप्रतिपादकत्वेन, बहवो ग्रन्थाः प्रणीताः, तेषु भारतादिग्रन्थजातं वेदाध्ययनानधिकारिणां स्त्रीशूद्रादीनामश्रुतश्रुतिस्मृत्यादिग्रन्थसमुदा-

यानां श्रवणमात्रतः कथासन्दर्भान्वयसन्दर्भादिकं यथासुलभतया परिज्ञातं भवेत्तथा, द्राक्षापाकफक्किकां च, कैशिकीवृत्तिं चाधिकृत्य निखिलजनानामनायासेनाध्ययनसाध्यत्वेनारचयत् ।

तथा हि—

॥ भारते, भीष्मपर्वणि, अध्याये, भगवद्गीतासु ॥

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ इत्यादि

तथैव परमार्थपरिज्ञानमभिलषतामुपकाराय ब्रह्मसूत्राण्यतिदुरूहार्थान्यखिलपण्डित सार्वभौमैरप्यत्यादरादुपदेशतो ध्येयान्यकरोत्, तथा हि, ब्रह्मसूत्रेषु प्रथमाध्याये—

सू. ओं, "अथातो ब्रह्मजिज्ञासा—जन्माद्यस्य यतः—शास्त्रयोनित्वात्—ईक्षतेर्नाशब्द मि"त्यादि ॥

तथा च, व्यासशिक्षायां–

श्रीवासुदेवं वरदं प्रणम्य
श्रीमद्गणेशं वचसां च देवीम् ।
शिक्षां प्रवक्ष्ये श्रुतिकारणाङ्ग
सुबोधकं लक्षणशीर्षभूषाम् ॥

अथ स्वरादिसंज्ञाश्च तत्प्रयोजनमेव च ।
तत्फलं च प्रवक्ष्यामि विदुषां प्रमुदेह्यहम् ॥

एवमेव छान्दसानां सुलभतया अर्थज्ञानं यथा स्यात्तथातिप्रसिद्ध-शब्दसंयोजनपूर्वकतयैव वेदशिक्षादिकं विरचितं अनेनैव क्रमेण, श्रीमद्भागवताख्यमेतत्पुराणरत्नमखिलपण्डितजनोपादेयतयाखिलोपनिषत्प्रतिपाद्यपरमार्थप्रकाशमकरोत्, एवमेव क्रमेण यथाधिकारं प्रणीतेषु तत्तद्ग्रन्थसमुदयेषु, पाक, रीति, वृत्त्यादीनां परस्परवैलक्षण्यं तस्य महर्षेर्विवक्षितमेव स्यात्, अन्यथा तदुद्दिष्टार्थस्य वैयर्थ्यापत्तेः, किं च,

अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अफाललोचनश्शम्भुर्भगवान् बादरायणः ॥

इत्यनेन त्रिमूर्तिस्वरूपत्वं व्यासमहर्षेः प्रतिपादितं भवति, किं च, भागवते, प्रथमस्कन्धे, तृतीयाध्याये—

ततस्सप्तदशे जातस्सत्यवत्यां पराशरात् ।
चक्रे वेदतरोश्शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥

इत्यादीनि बहूनि वचनानि तत्र द्रष्टव्यानि—

एतेन विनष्टनिखिलागमोद्धरणाय व्यासरूपेण भगवानादि-नारायण अवततारेत्यर्थः स्पष्टतरं प्रतिपादितो भवति एवं च सति सर्वज्ञेन भगवता व्यासमहर्षिणा तत्तदध्येतृजनानां प्रीत्युत्पादनाय यथाधिकारं विरचितभारतभागवताद्युत्तमग्रन्थेष्वनुसृतशय्यापाक-वृत्त्यादीनां परस्परवैलक्षण्यं तु निखिलास्मच्छिष्टजनानामतीव श्लाघनीयमेव भवतीत्यर्थमबुध्वा दोषबुद्ध्या प्रलपतोऽस्मत्पूर्वपक्षिणस्सन्देह-पदवीं न कोऽपि मूढोऽनुवर्तितः इत्याचक्ष्महे तस्मादेव तस्मिन्नेवार्थे

निखिलशिष्टजनाभ्युपगतप्रसिद्धदृष्टान्तप्रवचननामकमुष्टिकुट्टनेन तस्य शिरोगतानादिविषजदोषवेदनां निवर्तयिष्यामः ॥

तथा हि, श्रीमद्भगवत्पादादिभिः कविजनसार्वभौमैः कालिदासादिभिरपि कविवरैस्तथैवान्यैस्साधारणकविभिश्च, विरचितकाव्य, नाटक, चम्पू, भाण, प्रभृतिषु ग्रन्थेषु च, तथैव तत्कृतमतग्रन्थेषु च, व्याख्याग्रन्थेषु च वृत्ति, रीति, शय्यादीनां वैविध्यं तु दरीदृष्टमेव भवति, तस्मादेव तेषामनन्यकविजनसाधारणयोग्यता निखिलास्मदीयपण्डितजनश्लाघनीयैवाभूत्, तथा हि—

**॥ श्रीमद्भगवत्पादैर्विरचितग्रन्थेभ्यः केचन श्लोकाह्युदाह्रियन्ते ॥**

तथा हि, आत्मबोधे—

बोधोऽन्यसाधनेभ्यो हि साक्षान्मोक्षैकसाधनम् ।
पाकस्य वह्निवज्ज्ञानं विना मोक्षो न सिध्यति ॥
अविरोधितया कर्म नाविद्यां विनिवर्तयेत् ।
विद्याविद्यां निहन्त्येव तेजस्तिमिरसङ्घवत् ॥

इत्यादि, किं च—

तव हितमेकं वक्ष्ये वचनं शृणु सुखकामो यदि त्त्वम् ।
स्वप्ने दृष्टं सकलं हि मृषा जाग्रति च स्मर तद्वदिति ॥

इत्यादिष्वत्यन्तसुकुमारार्थसम्बन्धसाहित्येन च, मृदुलपदगुम्भनेन च बहवो ग्रन्थास्सामान्यमुमुक्षुजनानां हिताय विरचिताः ॥

किं च

## ॥ तैरेव भगवत्पादैर्विरचितसौन्दर्यलहर्यां ॥

शिवश्शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
नचेदेवं देवो न खलु कुशलस्स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥

इत्यादि एवमेव क्रमेण यथाधिकारं शारीरकमीमांसाभाष्यादिकं विरचितमिति ज्ञातव्यम् ॥

काळिदासाख्यकविजनसार्वभौमेन प्रणीतरघुवंश, मेघसन्देश, नलोदय, हरिश्चन्द्रनळोपाख्यानादिषु, वृत्ति, रीति, शय्यादीनां तेजस्तिमिरयोरिव विभिन्नतैव प्रसिद्धतया दृश्यते, तथा हि—

## ॥ रघुवंशे - प्रथमसर्गे ॥

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ इत्यादि

चतुर्थसर्गे—

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥

तस्मिन्नेव काव्ये, दशमसर्गे—

पृथिवीं शासतस्तस्य पाकशासनतेजसः ।
किञ्चिदूनमनूनर्धेश्शरदामयुतं ययौ ॥ इत्यादि

मेघसन्दशे, प्रथमसर्गे—

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत्पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुस्तम्भितांतर्जलौघ-
स्सोपानत्वं कुरुमणितटारोहणायाग्रयायी ॥

नळोदये, द्वितीयाश्वासे—

स्मरस्य युद्धरङ्गतां रसारसारसारसा ।
जिताविरयोगिनस्समुन्नतेन तेन तेन ते ॥

टीका.—रसा विश्वम्भरा, कथंभूता, सारसारसा साराः शोभनाः, सारसाः पक्षिविशेषाः यस्यास्सा तथोक्ता, स्मरस्य मन्मथस्य युद्धरङ्गतां जन्यस्थानतां ॥ 'युद्धमायोधनं जन्य'मित्यमरः॥ आर प्राप, ततः ते वियोगिनः विरहिणः समुन्नतेन तेन इनः स्वामी तस्य भावः इनता समुन्नता समुच्छ्रिता इनता यस्य तेन 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्ग' इत्यमरः ॥ तेन स्मरेण जितास्सकलाश्च प्रियाः सङ्गता इति भावः ॥

॥ तस्मिन्नेवाश्वासे ॥

पिकोपिकोपिकोपिको वियोगिनीरभर्त्सयत् ।
वचांसि भङ्गमालपन्नितानि तानितानि ताः ॥

तेनैव कविजनसार्वभौमेन काळिदासेन विरचितहरिश्चन्द्रनळोपाख्याने—

अथानुलोम्येन दमयन्ती चन्द्रोदये व्यसनवती जातेत्यर्थं च, प्रातिलोम्ये-चन्द्रमती हरिश्चन्द्रेण गर्भं प्रापितेत्यर्थं च प्रतिपादयन्नाह—

तापिता हिमधाम्नाऽभूत्तदालोकनकामना ।
साधवेतिकृताधीता रुचातीव महैनसा ॥

टीका.—तस्य नळस्य आलोकने वीक्षणे, कामनं आशा यस्यास्सा तथोक्ता भैमी हिमधाम्ना चन्द्रेण, अधवेति कृता अधवानां प्रोषित-भर्तृकाणां, ईतिमुपद्रवं करोतीति कृत्तया, अतएव, अतीव महैनसा अत्यन्तमहापातकवत्या अनाथस्त्रीवधादिति भावः ॥ 'कलुषं वृजिनै-नोघ'मित्यमरः, रुचा चन्द्रिकया, तापिता सती आधीता मनोव्याधिं प्राप्ताभूत् ॥ 'पुंस्याधिर्मानसी व्यथे' त्यमरः, अत्र तदालोकन-कामनेत्यनेन सङ्कल्पाख्या तृतीयावस्था सूचिता, हिमधाम्ना अधीतेत्यनेन अभिहिता निद्राभावाज्जागराख्या तुरीयावस्था ॥ प्रातिलोम्ये तु—

सा न हैमवती चारुताधीताकृतिवेधसा ।
नामका न कलोदात्तभूम्ना धाम हितापिता ॥

टीका.—हिमवतः अपत्यं स्त्री हैमवती पार्वती, सेव चारुतया सौन्दर्येण अधीता प्राप्ता, नामः मनः केळिरसः यस्यास्सा, नामका-कुलाङ्गनोचितलज्जावतीति भावः, हितानुकूला, सा चन्द्रमती, आकृतौ आकारे, वेधसा विष्णुतुल्येन ॥ 'वेधा विष्णौ च धातरी'ति शाश्वतः ॥ यद्वा, आकृतिवेधसा कार्येषु, ब्रह्मतुल्येन,

अघटनघटनादक्षेणेत्यर्थः ॥ कलासु विद्यासु, उदात्तभूम्ना महनीय-माहात्म्येन हरिश्चन्द्रेण, धाम तेजः ॥ गर्भोत्पादकं वीर्यमित्यर्थः, अर्पिता प्रापिता, नेति नगर्भिणीकृत्येत्यर्थः ॥

तस्मिन्नेव काव्ये, आनुलोम्ये—

कङ्कमैत्तनुसादन्सा प्रसवेषु सुनन्दनम् ।
नाजला बिसवल्लीव सिताकान्तिरधीरधीः ॥

प्रातिलोम्ये तु—

धीरधीरति कान्तासि वल्लीव सबिलाजना ।
नन्दनं सुषुवे सप्रसादं सानुत्तमैककम् ॥

एवमतिविचित्ररचनाशक्तिसम्प्राप्तानन्यकविसाधारणा समान-यशोवितानमहितानां सर्वतोमुखवाक्प्रपञ्चानां वश्यवचसां महाक-वीनां चिरतराभ्यस्तानर्गळकवित्वधाराप्रभावमहिम्ना विविधविचित्र-शय्यापाकवृत्त्यलङ्काररसविशेषपरिष्कृतकाव्यादिप्रणेतॄणां महात्मनां विचित्ररचनावैचित्र्यसाहित्येनानुवर्णनं तेषामुत्कर्षापादकमेव भवेन्नाप-कर्षापादकमित्याचक्ष्महे ॥

तस्मात्सर्वज्ञस्य भगवतस्स्वतन्त्रेच्छस्य व्यासमहर्षेः जह्नुकन्या-प्रवाहवत्सर्वतोमुखैव वाग्झरी प्रवहतीति विश्वविश्वजनीनैः पण्डित-जनसार्वभौमैस्तद्वाक्प्रपञ्चस्य परस्परं रीति, वृत्ति, शय्या, पाकादीनां वैविध्यं श्लाघ्यतममेवेति निश्चितसिद्धान्तखड्गविनिहतपक्षेण पूर्वपक्षि-णा द्वितीयकक्षामात्रलुठत्पदविन्यासेनोद्घुष्टदूषणरूपस्ववचनजालं जाल-वत्स्वनिरोधकं सत्तस्य महर्षेर्भूषणायितमभूदिति दिक् ॥

## ॥ तृतीयकक्ष्याखण्डनप्रकारः ॥

पूर्वोक्ततृतीयकक्ष्याप्रतिपादितयावद्विषयपर्यालोचनया, मात्स्य, गारुडादि, पुराणेभ्य उद्धृतश्लोकैः स्वर्णमयसिंहासनाधिरोपितश्रीमद्भागवतग्रन्थस्य प्रोष्ठपदानक्षत्रघटितपौर्णमास्यां वा, आहोस्वित्प्रोष्ठपदानक्षत्रघटितदिने वा, पूर्णिमायां वा, दानं त्वपरोक्षसाक्षात्काररूपनिश्श्रेयसप्रदत्वेन प्रतिपादितमित्युक्त्वा, तादृग्विधदानप्रतिपादकवचनानि च, हयग्रीवब्रह्मविद्येत्यादिविशेषणानि च, देवीभागवतपराण्येवेति पूर्वपक्षिणा सोद्धोषं प्रलपितेऽर्थे, दोषोद्घाटनपूर्वकं परमसिद्धान्तः प्रकाश्यते—

तथा हि—भूभारापनोदनाय, ब्रह्मरुद्रेन्द्राद्यखिलदेववृन्दप्रार्थनया यदुवंशेऽवतीर्णस्य श्रीमद्भगवतो नारायणपरब्रह्ममूर्तेरखिलस्वरूपस्य, गरुड, सिंह, आञ्जनेय, हंस, तुरङ्गमदन्तावळाद्यनेकवाहनवत्त्वं निखिलश्रुति, स्मृतीतिहासागमाद्यस्मदीयसद्ग्रन्थेषु प्रसिद्धतया विहितं हि श्रूयते, तथैव विष्ण्वालयेषु संवत्सरोत्सवादिषु, क्रियमाणेषु विष्णोर्सिंहवाहनवत्त्वं ह्यक्षिमद्भिस्सर्वैरपि प्रत्यक्षतयावलोक्यते, तथैव विघनस्सूत्रादिषु विष्णोर्गरुडसिंहादिवाहनवत्त्वं विधिरूपतया प्रतिपादितं हि दृश्यते ॥ तथा हि—

### ॥ भृगुप्रोक्ते, वैघानसे दैविकयज्ञाधिकारस्थोत्सवपटले ॥

सूत्रम्—"अथ विष्णोर्वाहनानि व्याख्यास्यामः—प्रथमे हंसो

द्वितीये सिंहस्तृतीये ह्याञ्जनेयश्चतुर्थे फणीन्द्रः पञ्चमे वैनतेयष्षष्ठे दन्तावळस्सप्तमे रथोऽष्टमे तुरङ्गमो नवमे शिबिका दशमे पुष्पकमिति"

॥ तथाचात्रिप्रोक्तकारिकाग्रन्थे ॥

अत्रिः—

हंसो मृगेन्द्रो हनुमान् फणीन्द्रः पक्षिराट् तथा ।
दन्तावळरथाश्वाश्च शिबिका पुष्पमण्टपः ॥
उत्सवे दिवसे श्रीमांस्तानारुह्य यथाक्रमम् ।
अर्चावतारमाहात्म्यं लोकानां दर्शयन् हरिः ॥

॥ तथा च, वैशम्पायनोक्तकारिकाग्रन्थे ॥

वैशम्पायनः—

प्रथमे दिवसे प्राप्ते हंसमारुह्य माधव ।
लोकान् पालय लोकेश लक्ष्मीश वरद प्रभो ॥
द्वितीये दिवसे प्राप्ते मृगेन्द्रमधिरुह्य च ।
भक्तानां नयनानन्दं कुरुष्व वरद प्रभो ॥
तृतीये दिवसे प्राप्ते हनूमन्तमधिष्ठितः ।
कटाक्षदुग्धकल्लोलैस्सर्वान् स्नापय केशव ॥
तुरीये दिवसे प्राप्ते फणीन्द्रमधिसंस्थितः ।
तूर्यवाद्यसमायुक्तो भक्तांस्त्राह्यजित प्रभो ॥
पञ्चमे दिवसे प्राप्ते वैनतेयं समाश्रितः ।
ब्रह्मघोषैस्तूर्यघोषैरन्वितः पाहि सर्वतः ॥
प्राप्ते षष्ठेऽह्नि देवेश गजेन्द्रमधिसंस्थितः ।

अर्चादिभेदरूपेण भक्तान् रक्षस्व माधव ॥
सप्तमे दिवसे प्राप्ते रथमारुह्य भक्तिद ।
नानादेवगणोपेत वीक्षस्व मधुसूदन ॥
अष्टमे दिवसे प्राप्ते तुरङ्गममधिश्रितः ।
नानायुधधरश्श्रीमन् पाहीमान् वरद प्रभो ॥
नवमे दिवसे प्राप्ते शिबिकामधिसंश्रितः ।
अनन्ततीर्थैस्सर्वेशस्सर्वान् प्लावय मद्विधान् ॥
दशमे दिवसे प्राप्ते पुष्पकं च समाश्रितः ।
दिक्पालकादिसहितस्सर्वतः पाहि केशव ॥

इत्यादि, एवमेव पाञ्चरात्रागमेष्वपि प्रतिपादितम्, अत्र ग्रन्थविस्तर-भयान्न तानि वचनान्युदाहृतानि ॥

एवं विघनस्सूत्रात्रिवैशम्पायनादिवचनैस्सिंहाद्यनेकवाहनवत्त्वं सर्वस्वरूपिणो भगवतश्श्रीमन्नारायणस्य निर्बाधकतया विधिचोदितमेव भवतीत्यर्थे सिद्धे, तन्निखिलकल्याणगुणगणवर्णनैकप्रधानतया, व्यास-महर्षिणा विरचितस्य, श्रीमद्भागवतपुराणरत्नस्य, तत्स्वरूपत्वेन तदधि-रूढसिंहवाहनस्य प्रतिरूपस्वर्णमयसिंहप्रतिमायामधिरोप्य दाने क्रिय-माणे, दातुरपरोक्षसाक्षात्काररूपमोक्षप्राप्तिस्सम्पद्यत इति रूपेण प्रवचनं, निखिलास्मच्छिष्टजनाङ्गीकार्यमेव भवतीत्यर्थे न कामप्यनुप-पत्तिं पश्यामः ॥

अपरं च—

नानृषिः कुरुते काव्यं नाविष्णुः पृथिवीपतिः ।

इत्यादिशिष्टजनवचनपर्यालोचनया सर्वेऽपि राजानो विष्णवंशजाता इत्यर्थस्सङ्गच्छते, प्रजापालनरूपपरमधर्मनिर्वहणायाधिकृतस्याभिषिक्तस्य राज्ञस्सिंहासनवत्त्वमव्यभिचारेण शास्त्रेषु प्रतिपादितं हि दृश्यते, तस्माद्विष्णवंशजातस्य राज्ञस्सिंहासनवत्त्वे सिद्धे तदंशकारणभूतस्य भगवतस्सिंहासनवत्त्वप्रवचने ह्यनुपपत्तिं भावयतः पूर्वपक्षिणः प्रत्यक्षापलापं कुर्वतः पक्षच्छेदेऽप्यक्ष्युन्मूलनं त्वपेक्ष्यत इति निश्चिनुमः, अन्यदप्यत्र रहस्यं, हेमाद्रि, रुद्रयामळप्रभृतिविविधदानप्रतिपादकनिबन्धनग्रन्थेषु तत्तद्रोगाविष्टजनानां रोगापनुत्तये विहितविविधदानप्रतिपादककल्पविधाने तत्तद्रोगानुरूपतया एकस्याएव देवतायाः बहुवाहनवत्त्वमभिहितं भवति, तथैव विविधायुधवत्त्वमपि परस्परविभिन्नतयैव श्रूयते, तस्मादत्र श्रीमद्भगवत्प्रतिपादकस्य भागवतग्रन्थस्य, स्वर्णसिंहप्रतिमाधिरोपितस्यैव दानं कर्तव्यमिति सिद्धान्तितपरमसिद्धान्तचन्द्रहासेन विभिन्नपक्षस्य पूर्वपक्षिणः पक्षावलम्बिनश्शाक्तजनास्स्वावज्ञां विजानन्तुतरामिति दिक् ॥

न च देवीभागवत, ललितोपाख्यानादिशाक्तग्रन्थेषु भगवत्यास्सिंहवाहनवत्त्वस्य प्रसिद्धतया प्रतिपादितत्वात्तद्वाहनवत्त्वं तस्याएव वक्तुं न्याय्यमिति वाच्यं, भगवत्या महालक्ष्म्या विष्णुभार्यात्वेन पूर्वोक्तरीत्या स्वभर्तृवाहनेषु सिंह, गरुड, गज, हंसादिषु मध्ये स्वेच्छानुरोधेन, कदाचित्सिंहवाहनाधिरोहणं, कदाचिद्गजवाहनाधिरोहणं, कदाचिद्धंसवाहनाधिरोहणं चापि नैवायुक्तं भवेत्, तथैव लोके सर्वत्रापि तत्तत्कुटुम्बेषु पुरुषारूढान्येव, शिबिकादीनि स्त्रीभिरप्या-

रूढानि भवन्ति, तदारोहणमात्रेण तानि सर्वाण्यपि स्त्रीवाहनान्येवेति व्यवहारस्तु न लोके प्रवर्तते ॥

किं च गृहारामक्षेत्रवित्तदासदासीवाहनपशुभूषणस्रगादीनामधिकारस्तु भर्तुरेवेति मन्वादिधर्मशास्त्रेषु निश्चितत्वात्तथा न कस्मिन्नपि विषये स्त्रियास्स्वातन्त्र्यं वर्तत इत्यर्थः ॥ 'न स्त्री स्वातन्त्र्यमर्हती'त्यादि शिष्टवचनैस्सर्वेषामपि विदितचरएव भवतीति निश्चितत्वात्, तस्माद्विष्णुवाहनान्तर्गत सिंह, गज, हंसादिवाहनारोहणमात्रेण न देव्यास्तेषु वाहनेष्वधिकारो वर्तत इति निश्चिनुमः ॥ ननु श्रु. "आत्मा वा रे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः, तद्विज्ञासस्वे"त्यादि, श्रुतिकदम्बेन वेदान्तशास्त्राध्ययनापेक्षिभिर्मुमुक्षुभिस्सर्वैरपि श्रवणमनननिदिध्यासनादिकं विधित्साया रूपत्वेन विहितं न तु कर्मठैः क्रियमाणदानधर्मादिविविधक्रियाकलापो मोक्षेच्छूनां विधिरूपतया प्रतिपादितो हि श्रूयते, एवं च सति, मोक्षशास्त्रस्यैतस्य श्रवणमननादिविधिभिस्साकं दानविधेरपि प्रवचनं नैव युक्तमिति महत्याक्षेपे सिद्धान्तस्त्वेवं प्रकाश्यते—

निखिलोपनिषत्तुल्यतां चैतस्य मोक्षशास्त्रस्य प्रतिपादयितुमेव भगवानादिनारायणस्वरूपो व्यासस्सर्वत्रापि निखिलश्रुत्यर्थमप्युद्धृत्य-श्लोकरूपेणारचयत्, केषुचिद्धट्टेषु तत्तच्छ्रुतीनामानुपूर्व्यनतिक्रमेणैव ताएव श्रुतीः श्लोकरूपेणावर्णयत्, तथा हि—

॥ भागवते, अष्टमस्कन्धे, प्रथमाध्याये ॥

आत्मावास्यमिदं विश्वं यत्किंचिज्जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनम् ॥

अयं तु श्लोकः—ईशावास्योपनिषदि प्रथमद्वितीयवाक्ये एव भवतः, एवमेव प्रकारेणान्यत्रापि प्रतिपादितश्रुतिरूपश्लोका द्रष्टव्याः॥ तस्मादेतस्य पुराणरत्नस्य, वेदस्येव, निरर्थकतया वर्णानुपूर्व्यनतिक्रमेण पठने च, तादृशश्रुत्यर्थसारभूतस्यास्य श्रोत्रियाय मुमुक्षवे दाने चापरोक्षसाक्षात्कारमोक्षावाप्तिरूपफलं तु लभ्यत इत्युक्त्वा, गुरुमूलतस्सत्सम्प्रदायानुसारेणार्थे परिज्ञाते मोक्षप्राप्तिस्तु कैमुतिकन्यायसिद्धेत्यभिप्रायो निखिलास्मच्छिष्टजनैर्निश्चेतव्य एव भवति, किञ्चात्र निरर्थकस्य वेदस्य यथासम्प्रदायं वर्णानुपूर्व्यनतिक्रमणपूर्वकाध्ययने महत्फलं त्वभिहितं ॥ तथा हि—

॥ प्रातिशाख्याख्यकुमारव्याकरणे - द्वितीयप्रश्नान्ते ॥

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविभागज्ञो गच्छेदाचार्यसँसदम् ॥'

गच्छेदाचार्यसँसदमिति, किंच ॥ कृतादियुगचतुष्टये, कृतयुगे तपसा फलसिद्धिरभिहिता, त्रेतायां तु ज्ञानेन फलसिद्धिरुक्ता, द्वापरे यज्ञादिना फलसिद्धिर्निश्चिता भवति, कलौ तु सर्वेषामपि मनुजानां दानेनैव फलसिद्धिर्भवतीति वक्ष्यमाणस्मृतिचोदितवचनप्रमाणैरवगम्यते, ऐतमेवार्थं मनसि निधाय स भगवान् परमकारुणिको

व्यासः मुमुक्षूणामपि पापनिवृत्तिः परम्परया मोक्षसाधिका भवेदिति निश्चित्य, एतस्यापि मोक्षशास्त्रस्य दानं तु विधिरूपतया कर्तव्यमित्यवादीत्, मुमुक्षूणामपि तपःप्रभृतिकर्मकलापैः पापनिवृत्तौ सत्यामेवमोक्षावाप्तिर्भवतीत्यर्थो भगवत्पादैरपि सूचितः, तथा हि, आत्मबोधप्रकाशिकायाम्—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम् ।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥

इति, अत्र तपोभिरिति, बहुवचनेन, तत्तद्युगानुरोधेन मनुना विहिततपो, ज्ञान, यज्ञ, दानान्येवाभिहितानि भवन्तीति ज्ञेयम् ॥

अतः कलौ सर्वेषामपि मनुजानां दानादेव सर्वार्थसिद्धिर्भवतीति निखिलश्रुतिस्मृतीत्यादिषु विधिरूपतया ह्यभिवर्णितार्थस्सर्वजनवेद्यो भवितव्य इत्यभिप्रायेण दानपारम्यप्रतिपादकनिखिलश्रुतिस्मृत्यादीनां वचनानि च, प्रतिग्रहीतृस्वरूपनिरूपणं च, व्याध्यादिना स्वतोदानकर्मणि शक्त्यभावे सति, प्रतिनिधिमूलतो दानं कर्तव्यमित्यपरिजानतामस्मदीयानां हिताय प्रतिनिधिस्वरूपनिरूपणं च, सप्रमाणकैर्वचनैः प्रकाश्यन्ते ॥ तथा च विष्णुराह—

पापं निवर्तयेद्धीमान् दानेनैव कलौ युगे ।

इति योगोऽस्य दानशब्दस्याङ्गिरसा स्पष्टतया दर्शितः ॥

वर्णानामाश्रमाणां च चातुर्वर्ण्ये युधिष्ठिर ।
दानं धर्मं प्रवक्ष्यामि यथा वेदे सुभाषितम् ॥

नन्दिपुराणे—

दानं परं प्रशंसन्ति दानमेव परायणम् ।
दानं बन्धुर्मनुष्याणां दानं कोशो ह्यनुत्तमः ॥
दानं कामफलो वृक्षो दानं चिन्तामणिर्नृणाम् ।
दानं पुत्रः परं द्रव्यं दानं माता पिता तथा ॥
न दानेन विना किञ्चित्प्रार्थितं फलमाप्यते ।
अपि वालाग्रमात्रस्य तुला तस्य न विद्यते ॥
हारनूपुरसङ्घैस्तु पूरितोत्तममन्दिरा ।
इन्दिरा प्राप्यते सर्वैर्दानादेवेति निश्चयः ॥

सौरपुराणे—

न दानादधिकं किञ्चिद्दृश्यते भुवनत्रये ।
दानेन प्राप्यते स्वर्गं श्रीर्दानेनैव लभ्यते ॥
दानेन शत्रून् जयति व्याधिर्दानेन नश्यति ।
दानेन लभ्यते विद्या दानेन युवतीजनः ॥
धर्मार्थकाममोक्षाणां साधनं त्रितयं स्मृतम् ॥

ब्रह्मकैवर्ते—

व्रतस्य साधनं दानं तपसस्स्थापनं च यत् ॥
दानमेव परं श्रेय इह लोके परत्र च ।
विमुक्तिसाधनं चैतच्छ्रुतिराह नृणां भुवि ॥

मनुः—

तपःपरं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥

उशनाः—

दानादृते नोपकारो विद्यते धनिनः परः ।
दीयमानं हि दत्तस्य भूयएवाभिवर्धत ॥ इति

वेदव्यासः—

यद्ददाति विशिष्टेभ्यो यच्चाश्नाति दिने दिने ।
तत्तु वित्तमहं मन्ये शेषं कस्यापि रक्षति ॥

यद्ददाति यदश्नाति तदेव धनिनो धनम् ।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि ॥

बृहस्पतिः—

तपोधर्मं कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् ।
द्वापरे चाध्वरः प्रोक्तः कलौ दानं दया दमः ॥

अत्रार्थे शतपथश्रुतिः ॥

तदेतत्त्रितयं सिद्धेद्दमो दानं दयेति च ।
दानेन भोगी भवति मेधावी वृद्धसेवया ॥
अहिंसायां च दीर्घायुरिति प्राहुर्मनीषिणः ॥

यमः—

यतीनां प्रणवो धर्मो निराहारो वनौकसाम् ।
दानमेव गृहस्थानां शुश्रूषा ब्रह्मचारिणाम् ॥

मात्स्ये—

पापकर्मसमायुक्तं पतन्तं नरके नरम् ।
त्रायते दानमेकं तु पात्रभूते द्विजे कृतम् ॥

तथा—

न्यायेनार्जनमर्थानां वर्धनं चाभिरक्षणम् ।
सत्पात्रप्रतिपत्तिश्च सर्वशास्त्रेषु पठ्यते ॥

कूर्मपुराणे—

दानधर्मात्परो धर्मो भूतानां नेह विद्यते ।
तस्माद्विप्राय दातव्यं श्रोत्रियाय द्विजातिभिः ॥

द्विजातिभिरित्युपलक्षणम् ॥ "वर्णानामाश्रमाणां चेदि"त्यादिना, व्यासादिभिस्सर्वसाधारणतया दानस्याभ्यनुज्ञातत्वात् ॥

महाभारते—

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः ।
गतिरेका हि वित्तस्य दानमन्यद्विपत्तयः ॥
ब्राह्मणायाभिरूपाय यो दद्यादर्थमर्थिने ।
स ददाति निधिश्रेष्ठं पारलौकिकमात्मनः ॥

कूर्मपुराणे—

न हि दानात्परतरमन्यदस्तीति मे मतिः ।
धने धनवतां किञ्चिदहार्यं राजतस्करैः ॥

वह्निपुराणे—

तथैव पुण्यतीर्थेषु व्रतेषु नियमेषु च ।
सम्यक्चीर्णेषु विप्रर्षे पश्चाद्दानं समाचरेत् ॥
यस्य वित्तं न दानाय नोपभोगाय देहिनाम् ।
नापि कीर्त्यै न धर्माय तस्य वित्तं निरर्थकम् ॥

तस्माद्वित्तं समासाद्य दैवाद्वा पौरुषादथ ।
दद्यात्सम्यग्द्विजातिभ्यः कीर्तनानि न कारयेत् ॥

स्कान्दे, प्रभासखण्डे—

देवालयं नो विदधाति वापीं
कुण्डं तटाकं न करोति कूपम् ।
पुण्यं विवाहं स्वजनोपकारं
तथा सभां वा द्विजमन्दिरं वा ॥
धनं सदा भूमिगतं करोति
क्षयं न जानाति कुलस्य चासौ ॥

व्यासः—

अहन्यहनि याचन्तमहं मन्ये गुरुं यथा ।
मार्जनं दर्पणस्येव यः करोति दिने दिने ॥
किं धनेन करिष्यन्ति देहिनो भङ्गुराशयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥
न दानाय न धर्माय न कामाय न कीर्तये ।
तत्परित्यज्य गन्तव्यं तदन्नं किं न दीयते ॥
इच्छानुरूपो विभवः कदा कस्य भविष्यति ।
अदाता पुरुषस्त्यागी धनं सन्त्यज्य गच्छति ॥
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥

मनुः—

दानधर्मं निषेवेत नित्यमैष्टिकपौष्टिकम् ।
परितुष्टेन भावेन पात्रमासाद्य भक्तितः ॥

इष्टौ यज्ञे दीयते यद्दक्षिणादि तदैष्टिकम् ।
बहिर्वेदि च यद्दानं तत्पौष्टिकमिति स्मृतम् ॥
यत्किञ्चिदपि दातव्यं याचितेनानसूयया ।
उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः ॥
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्सदान्वहम् ॥

विष्णुधर्मोत्तरे—

न ददाति च यो दानं मोघं तस्य जनार्दनम् ।
उत्थायोत्थाय दातव्यं ब्राह्मणेभ्यो युधिष्ठिर ॥

वह्निपुराणे—

अन्नं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्वा नरास्स्वर्यान्ति धार्मिकाः ॥

याज्ञवल्क्यः—

दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ।
याचितेनापि दातव्यं श्रद्धापूतं तु शक्तितः ॥

मत्स्यपुराणे—

उक्तसर्वगुणोपेत उक्तदोषविवर्जितः ।
कामधुग्धेनुवद्दानं फलत्यात्मेप्सितं फलम् ॥
इह कीर्तिं वदान्याख्यां स्फतीन् भोगान् त्रिविष्टपे ।
दानश्रद्धां तृतीयेऽपि जन्मनि प्रसवोत्तमे ॥ वदान्यो बहुप्रदः

दानमेव परो धर्मो दानमेव परं तपः ।
न हि दानात्परतरमिह लोके परत्र च ॥
दानेन भोगानाप्नोति दानेनायुश्च विन्दति ।
नरस्स्वर्गापवर्गौ च दानेनैव समश्नुते ॥

मार्कण्डेयपुराणे—

कुटुम्बिने श्रोत्रियाय ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवेऽप्यन्यमात्मनो भूतिमिच्छता ॥

देवलः—

दुर्लभं भारते वर्षे जन्म तस्मिन् मनुष्यता ।
मानुषे ब्राह्मणत्वं च दुर्लभं सुतरां मतम् ॥
विप्रत्वे सति दुष्प्रापा विद्यादिगुणयोगिता ।
तत्र न्यायार्जितार्थाप्तिस्ततो भक्त्याप्तिरिष्यते ॥
लब्ध्वैतद्गुणसंयोगं तीर्थं पात्रं च पर्व च ।
दानानि ये प्रयच्छन्ति कृतार्थास्ते नरा भुवि ॥

अगस्त्यः—

गोभिर्विप्रैश्च वेदैश्च सतीभिस्सत्यवादिभिः ।
अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥
यैर्नभुक्तं च न हुतं तीर्थेन मरणं कृतम् ।
हिरण्यमन्नमुदकं ब्राह्मणेभ्यो न चार्पितम् ॥
दीना विवसना रूक्षाः कपालाङ्कितपाणयः ।
दृश्यन्ते ते महाराज जायमानाः पुनः पुनः ॥

विष्णुधर्मोत्तरे—

सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति।
सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते ॥

कूर्मपुराणे—

यस्तु द्रव्यार्जनं कृत्वा नार्चयेद्ब्राह्मणान् सुरान्।
सर्वस्वमपहृत्यैनं राजा राष्ट्रात्प्रवासयेत् ॥

ब्रह्मपुराणे—

सदाचाराः कुलीनाश्च रूपवन्तः प्रियंवदाः।
बहुश्रुताश्च धर्मज्ञा याचमानाः परान् सदा ॥
दृश्यन्ते दुःखिनस्सर्वे प्राणिनः क्षुत्प्रपीडिताः।
अदत्तदाना जायन्ते परभाग्योपजीविनः ॥

व्यासः—

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥

स्कन्दपुराणे—

बोधयन्ते न याचन्ते देहीति कृपणं जनाः।
अवस्थेयमदानस्य माभूदेवं भवानपि ॥
देहीत्येवं ब्रुवन्नर्थी जनं बोधयतीव सः।
निवारयति यस्तं वै तिर्यग्योनिं व्रजेत्तु यः ॥

शातातपः—

माददस्वेति यो ब्रूयाद्द्रव्यं गोब्राह्मणेषु च।
यदिदं कष्टमर्थित्वं प्रागदानफलं हि तत् ॥

एकेन तिष्ठताधस्तादन्येनोपरितिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥

यमः—

कन्याप्रदाने यज्ञे वान्यस्मिन् वा धर्मसङ्कटे ।
विघ्नमाचरते यस्तु तमाहुर्ब्रह्मघातुकम् ॥
तस्माद्विभूतिमन्विच्छन् न दाने विघ्नमाचरेत् ।
दद्यादहरहः पात्रे लोकत्रयजिगीषया ॥

महाभारते—

सर्वकामैश्च सम्पूर्णं दत्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतस्स्वर्गं शतद्युम्नो महायशाः ॥
एते चान्ये च बहवो दानेन तपसा सह ।
महात्मानो गतास्स्वर्गं शुद्धात्मानो जितेन्द्रियाः ॥
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।

दानेन भूतानि वशीभवन्ति
दानेन वैराण्युपयान्ति नाशम् ।
परोऽपि बन्धुत्वमुपैति दाना-
द्दानं हि सर्वव्यसनानि हन्ति ॥

अत्रार्थे श्रुतिः—

दानं यज्ञानां वरूथं दक्षिणा लोके दातारँ सर्वभूतान्युपजीवन्ति दानेनारातीनपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्तीति ॥

तदेवाह, स्कान्दे—

सूतः—

श्रुत्वार्जुनस्य तद्वाक्यं हरिर्धर्मात्मजं मुदा ।
सम्मार्ज्य पाणिना पाणी वचनं चेदमब्रवीत् ॥
शृणु भूपाल वक्ष्यामि तव मुक्तिप्रदं शुभम् ।
सर्वपापहरं पुण्यं सर्वोपद्रवनाशनम् ॥
चतुर्णामपि वर्णानां नराणां पुत्रकामिनाम् ।
धनदं धनकामानां रोगिणां रोगनाशनम् ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
सङ्कलीकरणं चैव मलिनीकरणं तथा ॥
अपात्रीकरणं चैव जातिभ्रंशकरं तथा ।
उपपातकमित्येतन्नवधा परिकीर्तितम् ॥
एतेषां निष्कृती राजन् दानेनैव भवेद्ध्रुवम् ॥ इत्यादि
नित्यकर्मपरित्यागे दासी वेश्यागमेऽपि वा ।
अनृते चैव यत्पापं यत्पापं गुरुनिन्दया ॥
कन्याशुल्केन यत्पापं यत्पापं रुद्रविक्रये ।
नित्यहोमपरित्यागे व्रतलोपे च यद्भवेत् ॥
यत्पापं दारसन्त्यागे यत्पापं तिलविक्रये ।
वेदमातृपरित्यागे भूधेनुहरणेऽपि वा ॥
एवमादीनि पापानि सम्भवन्ति द्विजन्मनाम् ।
दानादस्मात्प्रणश्यन्ति नान्यथा कुरुनन्दन ॥

विप्रग्रामधनादाने विप्राणामपहासने ।
विप्रवृत्तिहरे पापं पापं यद्विप्रवञ्चने ॥
देवद्रव्यापहारेण पापं यच्छिवनिन्दया ।
यत्पापं चक्रचिह्नानां यत्पापं लिङ्गधारिणाम् ॥
तेषां दाने च यत्पापं पाषण्डत्वेन यद्भवेत् ।
यत्पापं दुष्टमांसानां भक्षणे हिंसने तथा ॥
विभवे सति नास्तिक्यात्पुण्यकालादिसम्भवे ।
न किञ्चित्क्रियते दानमसभ्यानां परिग्रहे ॥
वर्णव्यतिक्रमे पापं विवाहे राजनन्दन ।
यत्पापं पुत्रहिंसायां यत्पापं भ्रातृमारणे ॥
यत्पापं दारसन्त्यागे ह्यपराधं विना नृप ।
तटाकारामकासारवापीकूपविनाशने ॥
यत्पापं धेनुहिंसायां स्वराष्ट्रस्यापि पीडने ।
अल्पकार्ये बहूद्योगो बहूद्योगेऽल्पकार्यवान् ॥
गोविप्रग्रामराष्ट्रेषु चोरपीडाद्युपेक्षया ।
यत्पापं भवति क्षिप्रं वेदविद्वेषिणामपि ॥
एवमादीन्यनेकानि पापानि क्षितिमण्डले ।
राज्ञां भवन्ति सर्वत्र कर्मणा मनसा गिरा ॥
तेषामपीह शुद्ध्यर्थमुक्तं दानं स्वयम्भुवा ।
हीनमूल्येन यद्द्रव्यं यद्द्रव्यं बहुमूल्यतः ॥
कृत्वा न्यायेन यो जीवेद्यत्पापं रसविक्रये ।

धान्येषु रत्नजातेषु ह्युपकेशादिवस्तुषु ॥
क्रीत्वाल्पेनैव मूल्येन विक्रेतुर्बहुमूल्यतः ।
यत्पापं वणिजः प्रोक्तमसभ्यानां च भाषणे ॥
अश्वोष्ट्रकरमार्जारधेनुसूकरयोषिताम् ।
विक्रयेणैव यत्पापं लवणस्य विशेषतः ॥
एवं बहुविधं पापं विशां भवति नित्यशः ।
पराशरादयो विप्रा नृत्यन्त्यानन्दसंयुताः ॥
जम्बूद्वीपे महापुण्ये जन्म यः प्राप्य मानवः ॥
दानेऽस्मिन् विमुखो भूयात्कस्स्यात्तस्मादचेतनः ।
विद्यमानधनो यस्तु दानेऽस्मिन्विमुखो यदि ॥
तस्यैव जन्मसंवृत्तिस्सूकरेषु बहुष्विह ।
शुष्कीभूतस्य पापस्य ह्यार्द्रीभूतस्य पाप्मनः ॥
निष्कृतिर्भूप दानं यन्नान्यथा गतिरास्तिवह ।
कलौ तु पापभूयिष्ठे नरः पुण्यपराङ्मुखः ।
ब्रह्मा तदनुकम्पार्थं सृष्टवान् दानमुत्तमम् ॥
पुण्यं सुखार्थी कुर्वीत दुःखार्थी पापकर्मकृत् ॥
अतः पापं न कुर्वीत कर्मणा मनसा गिरा ।
अकृतेन क्षरेद्यज्ञस्तपो विस्मयतः क्षरेत् ॥
क्षरेत्कीर्तनतो दानमायुर्विप्रावमानतः ॥
अदातुः पापवृद्धिस्स्यात्पापवृद्धेर्दरिद्रता ।
दारिद्र्यात्कुरुते पापं पापात्तस्मादधोगतिः ॥

गतिहीनः पुनर्भूमौ जायते रोगसंयुतः ।
भूमौ जातस्य मर्त्यस्य धर्महीनस्य पापिनः ॥
देहात्कष्टतरं नास्ति तस्माद्दोषं न कारयेत् ।
एतैर्युक्तो यदा देही कर्मबन्धस्स्ववेश्मवत् ॥
मृत्वा मृत्वा पुनर्भूमावन्तो नास्तीह जन्मनाम् ।
तस्मात्सर्वप्रयत्नेन सर्वबन्धविमुक्तये ॥
सर्वदोषविनाशाय सर्वरोगोपशान्तये ।
सर्वेषां श्रेयसां भूत्यै कुर्याद्दानमनुत्तमम् ॥
शरीरं पापसम्भूतं पापेनैव प्रवर्धते ।
पापमूलमिदं ज्ञात्वा तच्छान्तिं साधयेन्नरः ॥
एवं त्वमपि राजेन्द्र कुरु दानमनुत्तमम् ।
सर्वपापविशुद्ध्यर्थं यावद्वित्तं सहाम्बया ॥

इत्याद्यखिलश्रुतिस्मृतीतिहासपुराणवचनबलात्सर्वैरप्यस्मदीयैरैहिकामुष्मिकफलसम्पादनेच्छुभिः कलियुगेऽस्मिन् दानमेवावश्यं कर्तव्यमित्यर्थस्सर्वमतसम्मततया निश्चेतव्य इति दिक् ॥

## ॥ अथ प्रतिगृहीतृधर्मस्वरूपनिरूपणम् ॥

ब्रह्माण्डपुराणे—

शुचिः पवित्रपाणिश्च गृह्णीयादन्तरामुखः ।
अभीष्टदेवतां ध्यायन् मनसा विजितेन्द्रियः ॥
कृतोत्तरीयको विप्र अन्तर्जानुकरस्तथा ।
दातुरिष्टमभिध्यायन् प्रगृह्णीयादलोलुपः ॥

विश्वामित्रः—

अभ्यर्थितश्च धर्मज्ञस्तथा बद्धशिखो द्विजः ।
स्नातस्सम्यगुपस्पृश्य गृह्णीयात्प्रयतश्शुचिः ॥

आपस्तम्बः—

आर्द्रवासास्तु यः कुर्याज्जपहोमप्रतिग्रहान् ।
सर्वं तद्राक्षसं विन्द्याद्बहिर्जानुश्च यत्कृतम् ॥

बोधायनः—

काषायवासाः कुरुते जपहोमपरिग्रहान् ।
न तद्देवेषु भवति हव्यकव्यस्वधाहविः ॥

गारुडपुराणे—

स्नातस्सम्यगुपस्पृश्य दधानो धौतवाससी ।
सपवित्रकरश्चैव प्रतिगृह्णीत कर्मवित् ॥

विष्णुधर्मोत्तरे—

प्रतिग्रहीता सावित्रं सर्वत्रैवानुकीर्तयेत् ।
ततस्तु कीर्तयेत्सार्धं द्रव्येण द्रव्यदेवताम् ॥
समापयेत्ततः पश्चात्कामश्रुत्या प्रतिग्रहम् ।
तदन्ते कीर्तयेत्सार्धं द्रव्येण द्रव्यदेवताम् ॥
समापयेत्ततः पश्चात्कामश्रुत्या प्रतिग्रहम् ।
तदन्ते कीर्तयेत्स्वस्ति प्रतिग्रहविधिस्त्वयम् ॥

आदित्यपुराणे—

ओंकारमुच्चरन् प्राज्ञो द्रविणं सकुशोदकम् ।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तयन् ॥

तथा

प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्त्रं पठेच्च राजन्यादुपांशु च तथा विशः ॥
मनसा च तथा शूद्रे स्वस्ति वाचनमेव च ।
सोङ्कारं ब्राह्मणे कुर्यान्निरोङ्कारं महीपतौ ॥
उपांशु च तथा वैश्ये मनसा स्वस्ति शूद्रके ॥

## ॥ अथ दानपात्रस्वरूपनिरूपणम् ॥

तपस्तप्त्वा सृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां ब्रह्मसंरक्षणाय च ॥

मत्स्ये—

नास्ति विप्रसमो देवो नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परं शास्त्रं नास्ति विप्रात्परो निधिः ॥

संवर्तः—

श्रोत्रियाय दरिद्राय चार्थिने च विशेषतः ।
यद्दानं दीयते तस्मै तद्दानं शुभकारणम् ॥

भविष्योत्तरपुराणे—

क्षान्तिस्स्पृहा दया सत्यं दानशीलं तपश्श्रुतम् ।
एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥

याज्ञवल्क्यः—

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तं भवेच्छ्रेष्ठं तद्धि पात्रं प्रकीर्तितम् ॥

ब्रह्मकैवर्ते—

जन्मना ब्राह्मणो ज्ञेयस्संस्कारैर्द्विज उच्यते ।

विद्यया याति विप्रत्वं त्रिभिश्श्रोत्रिय उच्यते ॥

यमः—

स मम ब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।
श्रोत्रिये शतसाहस्रमनन्तं वेदपारगे ॥

संवर्तः—

श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः ।
आत्मज्ञे शतसाहस्रमनन्तं चाग्निहोत्रिणि ॥
उत्पत्तिं प्रळयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स भवेद्वेदपारगः ॥

पद्मपुराणे—

एकं वेदान्तगं विप्रं भोजयेच्छ्रद्धयान्वितः ।
तस्य भुक्तौ भवेत्कोटिर्विप्राणां नात्र संशयः ॥
उद्दिश्याथ वसुं देवं प्रियतामिति चानघे ।
पात्रं मनसि सञ्चिन्त्य तोयमप्सु विनिक्षिपेत् ॥

॥ उद्दिश्याथ वसुं देवमित्यादि पात्रासन्निधिविषयम् ॥

इति पात्रलक्षणम् ॥

## ॥ अथ अपात्रस्वरूपनिरूपणम् ॥

गोरक्षकान् वाणिजकान् तथा दुश्शीलिनश्शठान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

भविष्यत्पुराणे—

भस्मनीव हुतं हव्यं तथा भवति निष्फलम् ।

जपेन रहिते विप्रे तथा दानं निरर्थकम् ॥

शातातपः—

नष्टं देवलके दत्तं प्रणष्टं चैव वार्धुषि ।
यच्च वाणिजके दत्तं न च तत्प्रेत्य नो इह ॥
नाब्राह्मणाय दातव्यं न देयं ब्राह्मणब्रुवे ।
नब्राह्मणक्रिये चैव न च दुर्ब्राह्मणे धनम् ॥

तथा

आमपात्रे रणे यद्वन्नश्यते सह भाजनम् ।
अपात्रेण तथा दत्तं सहपात्रेण नश्यति ॥
व्यर्थमब्राह्मणे दानं पतिते तस्करे तथा ।
गुरोश्चाप्रीतिजनके कृतघ्ने ग्रामयाचके ॥
वेदविक्रयिके चैव यस्य चोपपतिर्गृहे ।
स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च ॥
ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ ।
किङ्करेषु च यद्दत्तं वृथा दानानि षोडश ॥
बीजं चतुष्पथे पक्कं वापितं निष्फलं भवेत् ।
दानं तद्वदपात्रेषु विन्यस्तं निष्फलं भवेत् ॥

॥ अथ प्रतिनिधितया नियोज्यपुरुषस्वरूपनिरूपणम् ॥

स्कान्दे—

असामर्थ्यशरीरस्य दाने च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ॥

भ्रातरं भगिनीं शिष्यं ब्राह्मणं दक्षिणादिभिः ॥

तत्रैव प्रभासखण्डे—

आत्मपुत्रपुरोधाश्च भ्राता पत्नी सखापि वा ।
दानादिधर्मकार्येषु जायते प्रीतिहस्तकाः ॥
एभिः कृतं महादेवी स्वयमेव कृतं भवेत् ॥

स्मृतौ—

काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके च सः ।
काम्ये चापक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः ॥
पुत्रो वा धर्मपत्नी वा यजमानेप्सितं चरेत् ।
यजमाननियोगेन ऋत्विग्वा दानमाचरेत् ॥
यथोक्तदक्षिणा तस्मै दातव्या दानसिद्धये ।
पुरोधाः क्षत्रियो दातुर्द्वयोः पुण्यं समं स्मृतम् ॥
उपदानफलं ताभ्यां समग्रं समवाप्यते ।
शृणु यो वान्यमुद्दिश्य चैकादश्यामुपोषितः ॥
यमुद्दिश्य कृतो विप्रस्तस्य पूर्णफलं भवेत् ।
कर्ता दशगुणं पुण्यं प्राप्नोत्येव न संशयः ॥

एवं निखिलश्रुतिस्मृतीतिहासपुराणेभ्यः उद्धृतदानपारम्य-
प्रतिपादकप्रमाणवचनरत्नरत्नावल्यलंकृत-
तृतीयकक्ष्याखण्डनं समाप्तम् ॥



## ॥ चतुर्थकक्ष्याखण्डनम् ॥

---

हयग्रीवब्रह्मविद्यात्वं देवीभागवतस्येत्यादि यदुक्तं तदप्यनादि-दुर्वासनाप्रयुक्त स्वाज्ञानाज्ञानद्वारा पूर्वपक्षिणा प्रलपितमिति वक्ष्य-माणसद्धेतुकवाक्यप्रपञ्चपर्यालोचनया पण्डितजनैः प्रयुक्तधिक्कारपूर्वक-तिरस्कारवचनस्य पात्रीभूतं भवेदिति निश्चिनुमः, तथा हि ॥

श्रीमद्धयग्रीवब्रह्मविद्येत्यत्र हयग्रीवपरब्रह्ममूर्तये प्रोक्ता ब्रह्म-विद्या वा? आहोस्वित् हयग्रीवपरब्रह्ममूर्तिना प्रोक्ता ब्रह्मविद्येति वा? नाद्यः, विनष्टनिखिलवेदपुराणेतिहासानामुद्धरणैकप्रयोजनतया श्रीह-यग्रीवावतारस्य प्रतिपादितत्वात्, तत्र तत्र, अगस्त्ययाज्ञवल्क्यनार-दब्रह्मादीन् प्रति तत्कृतनिखिलागमतदङ्गोपदेशस्य, कण्ठोक्त्या अभि-हितत्वात्, नापि द्वितीयः, निखिलपुरुषार्थप्रदानन्तवेदजातस्य च, तदङ्गभूतशास्त्राणां च, तदर्थप्रकाशकानन्तग्रन्थजातस्याप्यपुरुषप्रणीत-त्वात्, तथैव निखिलास्मच्छिष्टजनैरप्यभ्युपगतत्वाच्च ॥ किं च हय-ग्रीवतन्त्रे, व्यासनारदसंवादे—

पुरा सर्वासु विद्यासु नष्टासु प्रळये मुने ।
नारायणो जगत्कर्ता रमाश्रितभुजान्तरः ॥
निस्स्वाध्यायवषट्कारस्वधास्वाहाविवर्जितम् ।
विलोक्य भुवनं कृत्स्नं किमिति व्याकुलो भवेत् ॥
अन्वीक्ष्य वेदशास्त्राणि नापश्यत्किमपि प्रभुः ।
हयग्रीवतनुं प्राप्य सच्चिदानन्दरूपिणीम् ॥

निष्कळङ्कशशिच्छायां निर्निद्रकमलेक्षणाम् ।
नित्यामचिन्त्यविभवां नीराजितपदां सुरैः ॥.
चन्द्रमण्डलमध्यस्थपुण्डरीकनिषेदुषीम् ।
शङ्खचक्राक्षवलयपुस्तकोज्वलबाहुकाम् ॥
पूरयित्रीं जगत्कृत्स्नं प्रभया देहजातया ।
ऋषिभिः प्राक्तनैर्ध्येयां ज्ञानविज्ञानपूरिताम् ॥
मनोवाग्विषयातीतामागमान्तनिवासिनीम् ।
कोशातीतां गुणोन्मुक्तामवस्थात्रयवर्जिताम् ॥

इत्यादिना, निखिलवेदजातस्य च, तदुदितकर्मकलापस्य च साकल्येन हानौ सत्यां, तदुद्धरणैकप्रयोजनतया हयग्रीवावतारो भगवता स्वीकृत इत्यर्थस्य प्रतिपादितत्वाच्च, तस्माद्धयग्रीवमूर्तिनोद्धृता ब्रह्मविद्येति वा, आहोस्वित्, हयग्रीवस्य ब्रह्मविद्येति वा वक्तुं सुशकं, अत्र द्वितीये षष्ठीतत्पुरुषे, उद्धार्योद्धारकभावरूपसम्बन्धस्तु स्पष्ट एव प्रतिपादितो भवति, तत्रत्यब्रह्मविद्याशब्दस्य कोऽर्थ इति विचिकित्सायां 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिरि'ति कोशबलाद्ब्रह्मन् शब्दस्य यदि वेदार्थकत्वमुररीकुर्मस्तर्हि ब्रह्मविद्ये तस्य वेदविद्येत्यर्थस्तु लब्धो भवति ॥ यदि तत्त्वार्थकत्वमङ्गीकुर्मः तदा ब्रह्मणस्तत्त्वस्य विद्याज्ञानमित्यर्थस्तु निष्पन्नो भवति, यदि तपस्त्वभिहितं स्यात्, तदा तपोविद्येत्यर्थस्तु लभ्यते, यदि चतुर्मुखब्रह्मपरत्वमुररीकुरुषे तदा श्रीमन्नारायणपरब्रह्ममूर्तिना स्वनाभीकमलादुद्भूताय ब्रह्मणे चतुर्मुखायोपदिष्टवेदविद्येत्येवार्थस्संगच्छते, यदि विप्रार्थमङ्गीकरोषि तदानीमपि

द्विजानां वेदाध्ययनस्य विहितत्वात् ब्राह्मणानामध्येयविद्येत्यर्थोऽभि-
हितो भवति तथा च पूर्वोक्तरीत्या ब्रह्मन् शब्दवाच्यनिखिलार्थेष्वपि
ब्रह्मविद्येत्यस्य देवीविद्येत्यर्थस्तु न कदापि लभ्यते न च ब्रह्मणो भार्या-
रूपत्वात् ब्रह्मन् शब्देन तद्भार्यारूपसरस्वत्यभिहिता भवेदिति वाच्यं,
तर्हि ब्राह्मीति विद्येति वा, अहोस्विद्ब्राह्मणी विद्येति वा, उत ब्रह्माणी
विद्येति वा स्यात्, तत्कथमित्युक्तौ, ब्रह्मण इयमित्यर्थे तस्येदमिति
सूत्रेण, अण्प्रत्यये सति 'टिड्ढाणञि' त्यादिना ङीप्प्रत्यये, ब्राह्मीति
रूपं निष्पन्नं तथैव ब्रह्मणो भार्येत्यर्थे विवक्षिते, ब्रह्मन् शब्दस्य
शार्ङ्गरवादित्वात् 'शार्ङ्गरवादिभ्यो ङीनि'ति सूत्रेण ङीनीकृते, ब्राह्म-
णीति रूपमुपपन्नं भवति, किं च ब्रह्माणमानयति जीवयतीति कर्म-
ण्यणि, टिड्ढाणञित्यादिना ङीपि सति, ब्रह्माणीति रूपं सम्पन्न-
मभूत्, न च तत्र तत्र शाक्तग्रन्थेषु पूर्वोक्तक्रमेणागस्त्यं प्रति महा-
विद्याया हयग्रीवोपदिष्टत्वेन प्रतिपादनं कथमुपपद्यत इति वाच्यं,
विविधमन्त्रकलापप्रतिपादकविद्याया अपि चतुर्थवेदान्तः पातित्वान्नि-
खिलवेदोद्धरणैकपरायणेन श्रीहयग्रीवमूर्तिनोद्धृतवेदवृन्दे, शते पञ्चा-
शन्न्यायेन, तस्या अपि महाविद्यायास्तत्रान्तर्भावस्तु वक्तुं युक्तएव
भवतीति ब्रूमः, किं च 'प्रोष्ठपद्यां पौर्णमास्यां स याति परमां गति-
मि'त्यादिना श्रीमद्भागवतग्रन्थदानकालप्रतिपादनपूर्वकतया यदुक्तं तत्र
विचारयामः, अनाघ्रातस्मृतिगन्धेनाननुष्ठितवेदचोदितसद्व्रतव्रातेना-
सम्भावितव्रतिजनसमुदायेनापक्षीणपक्षेण पूर्वपक्षिणा स्वपक्षहानि-
मप्यपरिगणय्य स्वेच्छामनुवर्तमानेन पूर्णिमायां तथैव प्रोष्ठपदानक्षत्रे

च महाभगवत्युद्देश्यकदानादिकमेव कर्तव्यमिति निखिलस्मृतीतिहासविपरीतार्थस्त्वभिहितः, एवमेव विपरीतार्थकलुषितचित्तमलेन पूर्णिमाप्रोष्ठपदयोः महाभगवत्युद्देश्यककर्मैव कर्तव्यं नान्यदिति वदतानेन, सर्वजनसाधारणाहारसञ्चारभाषणादिप्रसक्तिरपि निषिद्धकोटावेव निवेशिता भवेदिति मन्यामहे, तथा हि ॥

सर्वेष्वपि शिवविष्णवालयेषु पञ्चपर्वोत्सवादिषु क्रियमाणेषु पूर्णिमायामतीव श्लाघ्यतमत्वेनोत्सवादिकं क्रियते, न तथा देव्यालयेषु देवीविषये पूर्णिमास्वाराधनादिकं प्रसिद्धतया क्रियते, नापि दानकाण्डप्रतिपादकग्रन्थेषु देव्याः प्रीतये तामुद्दिश्य दानादिकं तस्मिन्नेवाहनि कर्तव्यमिति प्रसिद्धतया लिखितं हि दृश्यते, किं च तत्रैव पूर्णिमायां, श्राद्धविशेषस्य कर्तव्यतया स्मृतिषु विहितं हि दृश्यते, अपरं च, श्रीहयग्रीवोपनिषदि, एकादश्यां पौर्णमास्यां वा हयग्रीवं जप्त्वा महानुभावो भवतीत्यादिना पूर्णिमायामेकादश्यां वा हयग्रीवमनोर्जपस्य प्राप्तिफलरूपतया, कण्ठोक्त्या प्रतिपादितं च श्रूयते, अपि च, पूर्णिमाया अधिपतिर्महेश्वरः, प्रोष्ठपदानक्षत्रस्य अधिदेवोऽहिर्बुध्न्यः, अहिर्बुध्न्योनामेश्वरः ॥ 'अहिर्बुध्न्यो महाकालो महानटः' इति कोशात्, वाराधिपेष्वपि भानुवारस्य सूर्यः, तथैव, सोम, कुज, सौम्य, गुरु, शुक्र, शनिवासराणां यथा क्रमं, इन्दु, भौम, बुध, बृहस्पति, भृगु, मन्दा एव वाराधिपाः एवं दिनाधिपनक्षत्राधिपेषु मध्ये, न यस्य कस्यापि देव्या आधिपत्यं प्रतिपादितं हि दृश्यते, एवं च सति विपक्षिणास्मत्पूर्वपक्षिणा सद्धर्मनिबद्धापूर्वजिह्मगप्रयोग-

पदवीमनुवर्तमानेनावश्यं भाविविपद्भाजा प्रलपितानर्थकवचनसमुदयस्य, तृणनिकृन्तनजललेखनादिवन्निष्फलतैवाप्यत इति सुधियो विदां कुर्वन्तु ॥

ग्रन्थविषयेत्वष्टादशसहस्रत्वद्वादशस्कन्धसम्मितत्वादिकस्य सर्वस्यापि श्रीमद्भागवत, देवीभागवतयोर्विषये समानतयाभ्युपगतत्वान्न तद्विचारोऽस्माभिरादृतः, किं च, तथैव गरुडपुराणोदाहृतस्य 'अर्थोऽयं ब्रह्मसूत्राणामि' त्यादिना प्रतिपादितविशेषणसमुदयस्य गन्धमात्रस्य देवीभागवतविषये, ह्यप्रसक्तत्वात्तल्लक्षणसमन्वयदशायां शाक्तास्त्वक्षीणि निमील्य, अन्ध, मूक, बधिर, वेषव्याजादिना, आहोस्वित्, स्वोपास्यमहाभगवत्यनुग्रहाधिक्यसम्पादनायानुसृतावामाचारानुष्ठानशीलतया सेवितासवपानप्रयुक्तमूर्च्छादिना वा, गारुडपुराणप्रमाणपरिचिन्तने विस्मृतचित्तवृत्तयो ह्यभूवन्, तस्माद्गारुडवचनाकर्णनमपि तेषामनिष्टानर्थोपादकमेव भवेदिति दिक् ॥

## ॥ पञ्चमकक्ष्याखण्डनम् ॥

पञ्चमकक्ष्याप्रपञ्चितयावद्विषयविवेचनया श्रीमन्महाभारतप्रणयनात्पूर्वमेवाष्टादशमहापुराणोपपुराणानि तेनैव महामुनिना व्यासेन विरचितानीत्यर्थे निश्चिते, ततः परस्मिन् काले विरचितस्य श्रीमद्भागवतग्रन्थस्य महापुराणान्तःपातित्वं न कदापि सङ्घटत इति पञ्चमकक्ष्यावलम्बिना पूर्वपक्षिणा पण्डितंमन्यमानेनासत्सम्प्रदायाधीतात्यल्पासद्ग्रन्थपठनासादितचित्तमलेन प्रलपितवचनजालमविवेकाधि-

क्यान्निगदितमिति निश्चित्य, तदनादिचित्तमलविमोचनद्वारा स्वस्थता-प्रदायिनीं वक्ष्यमाणयुक्तिसंहतिरूपामतिसंस्कृतनेपाळबीजरचितवटक-मुष्टिमेककालेनास्मै प्रयच्छामः ॥ तथा हि—

श्रीमदादिनारायणपरब्रह्ममूर्तेश्चतुर्विंशतिसंख्याकेष्ववतारेषु सप्तदशावतारतया निखिलश्रुतिस्मृतीतिहासपुराणाद्यखिलविद्यासमुदयमुद्धर्तुमाविर्भूतेन भगवद्व्यासमहर्षिणा निखिललोकोपकारायातिनिगूढानन्तवेदजातमपि तदर्थोपबृंहकश्रुतिस्मृतीतिहासपुराणादिकं च परिष्कृतमित्यर्थः सर्वजनविदितचर एव श्रूयते ॥ तथा हि—

भागवते, स्कन्धे, १, अ. ३, ततस्सप्तदशे जातस्सत्यवत्यां पराशरात्, चक्रे वेदतरोश्शाखा दृष्ट्वा पुंसोऽल्पमेधस इत्यादि, तत्रेयं प्रक्रिया, विद्वच्छिखामणिभिरत्यादरात्साकूतमवधार्या, तथा हि, ऋगादिवेदान् संविभज्य पैलादिभ्य उपदिश्य, ततः परं निखिलवेदजातप्रतिपाद्यपरमतत्त्वावबोधनाय ब्रह्मसूत्राणि, निखिलश्रुतिसमुदयमणिगणग्रथनसूत्राणीव स भगवान् व्यासः, रचयामास, तदा वेदानधिकारिणां स्त्रीशूद्रद्विजावभासानामुपकाराय निखिलवेदार्थोपबृंहकतया भारतनामकमितिहासरत्नं शतपर्वकं विरचय्य तच्चातिरमणीयमपि ग्रन्थवैपुल्येनाध्येतॄणामनधीतश्रुतिस्मृतीनां कदाचिदपरिज्ञेयमेव भवेदिति सन्दिहानस्स एव मुनिवरस्स्वशिष्यौ, वैशम्पायन, जैमिनी, आहूय तस्य शतपर्वकस्य महाभारतस्य अष्टादशपर्वतया सङ्ग्रहरूपेण तदेव कुरुतमित्याज्ञा दत्वा, तन्मूलतो महाभारतग्रन्थस्य सङ्ग्रहद्वयं

कारयामास, तयोर्मध्ये वैशम्पायनकृतं यद्भारतं तदेवास्मदीयैः पण्डितवरैरत्रत्यैरहरहः पापठ्यते, न जैमिनिकृतं, तत्तु न सार्वत्रिकं तस्मिन्नश्वमेधपर्वमात्रं मयाप्यधीतचरं, किञ्चायमेवार्थः वैशम्पायनीय-भारते आदिपर्वणि स्पष्टं प्रतिपादित एव हि दृश्यते ॥ तथा हि—

श्रीमहाभारते - आदिपर्वणि - अनुक्रमणिकाध्याये

शौनकादिऋषीन् प्रति सूतोक्तिः ॥

समीपे पार्थिवेन्द्रस्य सम्यक्पारीक्षितस्य च ।
कृष्णद्वैपायनप्रोक्तास्सुपुण्या विविधाः कथाः ॥
कथिताश्चापि विधिवद्या वैशम्पायनेन च ।
श्रुत्वाहं ता विचित्रार्था महाभारतसंश्रिताः ॥

कृष्णद्वैपायनकथितास्तथैव वैशम्पायनकथितकथाश्च श्रुताः इत्युक्तत्वात्, श्रीमहाभारतस्य वैशम्पायनप्रवक्तृकतापि पार्थक्येन वर्तेत इत्यर्थस्स्पष्टं प्रतिपादितो भवति ॥

॥ किंच - तस्मिन्नेवानुक्रमणिकाध्याये ॥

"एतत्पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ।
ततस्तु सूतपुत्रेण रौमहर्षणिना पुरा ॥
कथितं नैमिशारण्ये पर्वाण्यष्टादशैव तु ।

समासो भारतस्याय मि"त्यादिना सूतप्रोक्तभारतं तु व्यास-कृतशतपर्वसङ्ग्रहरूपमष्टादशपर्वसम्मितमित्यर्थस्स्पष्टतया प्रतिपादितो भवति, अपरं च, तस्मिन्नेव घट्टे—

हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् ।
भविष्यत्पर्वचाप्युक्तं खिलेष्वेवाद्भुतं ततः ॥

अत्र प्रतिपादितैः, पुराणं, खिलसंज्ञितं, खिलेष्वेवाद्भुतं, भविष्यत्पर्वेत्यादिशब्दैः पूर्वमृषिप्रणीतविविधविचित्रकथागुम्भितपुराणानि, खिलान्यासन्नित्यर्थश्च तत्परिष्करणं च व्यासेन कृतमित्यर्थश्च द्योतितो भवति ॥

एतेन श्रीमद्व्यासमहर्षिप्रणीतशतपर्वसहितस्य श्रीमहाभारतस्य वैशम्पायनजैमिनीभ्यां विरचितभारतग्रन्थावतिसङ्ग्रहरूपावित्यर्थश्च तत्कृतभारतद्वयेऽपि केषुचिद्धट्टेषु सन्दर्भानुकूलतया श्लोकाश्चाध्यायाश्च नूतनतया प्रतिपादिता एव भवेयुरित्यर्थश्च, बहूनामध्यायानां पर्वणां च, विशेषेण सङ्कोचोऽप्यभवदित्यर्थश्च विद्वच्छिखामणिभिरत्यादराद्दूह्य एव भवेदिति निश्चिनुमः......

किञ्च, पूर्वोक्तक्रमेणैव, ब्राह्म, वैष्णव, गारुडाद्यखिलपुराणानि तु पूर्वतनैर्ऋषिभिर्विविधविचित्रकथासन्दर्भघटनादिभिरतिरमणीयतया विरचितान्येवावर्तन्त, अपि तु, तेषु कानिचिदुत्सन्नानि, कानिचिदतिगूढार्थानि, कानिचिद्विच्छिन्नपूर्वोत्तरसन्दर्भाणि चासन्, तत्र तत्र विच्छिन्नविषयादीन् सम्यगालोच्य, तत्तत्सन्दर्भानुकूलतया स महर्षिर्व्यासो देशकालावनुसृत्य, जीर्णालयोद्धरणादिकमिव तान्येव पुराणानि सम्यक्परिष्कृतवानित्यर्थो बुद्धिमद्भिस्तत्तद्विषयप्रपञ्चितदेशकालकथासन्दर्भाद्यालोचनया, स्पष्टतरमेव जातो भवेत्, तस्मादेव

हेतोः ॥ "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इति वचनस्थ-कर्तृशब्दस्य प्रवर्तक इत्यर्थस्तु निश्चेतव्य एव भवति, अन्यथा विष्णु-पुराणे, ब्राह्मादिष्वपि पुराणेषु प्रतिपादितोद्घातप्रकरणेषु तत्तत्पुराण-प्रवक्तॄणां विविधता तु न तदाप्यभिहिता भवेत्, तथा च ॥

॥ विष्णुपुराणे - प्रथमाध्याये - पराशरं प्रति - वसिष्ठोक्तिः ॥

सन्ततेर्न मम च्छेदः क्रुद्धेनापि यतः कृतः ।
त्वया तस्मान्महाभाग ददाम्यन्यं महावरम् ॥
पुराणसंहिताकर्ता भवान् वत्स भविष्यसि ।
देवतापारमार्थ्यं च यथावद्वेत्स्यसे भवान् ॥

इत्यारभ्य—

सोऽहं वदाम्यशेषं ते मैत्रेय परिपृच्छतः ।
पुराणसंहितां सम्यक् तां निबोध यथा तथम् ॥

इत्युक्तत्वाद्विष्णुपुराणप्रणेता पराशरमहर्षिरेवेत्यर्थः ॥ कण्ठोक्त्या प्रतिपादितो भवति, एवमेवान्येष्वपि पुराणेषूपोद्घातप्रकरणेषु तत्तद्ग्रन्थप्रणेतृप्रतिपादकवचनानि द्रष्टव्याणि, नात्र ग्रन्थविस्तरभयाल्लिखितानि, किं च, अष्टादशपुराणेषु मध्ये, तत्तत्पुराणस्यारम्भे वा, आहोस्विदन्ते वा, ब्राह्माद्यष्टादशमहापुराणानां परिगणना तु श्लोकरूपतया प्रतिपादितैव दृश्यते, यदि निखिलपुराणानां प्रणेता व्यासस्स्यात्तर्हि, अष्टादशपुराणप्रणयनेह्यपरिपूर्णे, तत्तत्पुराणानां नामानुक्रमणिका च, तत्तत्पुराणघटितश्लोकसंख्यापरिमितिश्च, अजातसुतस्य

भविष्यत्सुखदुःखनिर्णायकलेखनादिवत्तस्य महर्षेः पूर्वमेव कथं विज्ञाते भवतः, तत्तत्पुराणेषु भारतादीतिहासग्रन्थे च तत्तत्कथा-सन्दर्भोपष्टम्भकतयाभिवर्णितेतिहासेषु कलियुगादिदशायामुत्पन्नपरीक्षिज्जनमेजयप्रभृतयश्च, तदव्यवहितपूर्वकालोत्पन्नयुधिष्ठिरप्रभृतयश्चापि विशेषतः प्रतिपादिता भवन्ति, तेषां प्रभुत्वदशायामपि सम्भूत-विचित्रचरित्राणि चाभिवर्णितान्येव दृश्यन्ते, किं बहुना ?

॥ भारते, आदिपर्वणि, प्रथमाध्याये, शौनकादिऋषीन् प्रति सूतोक्तिः ॥

जनमेजयस्य राजर्षेस्सर्पसत्रे महात्मनः ।
समीपे पार्थिवेन्द्रस्य सम्यक्पारीक्षितस्य च ॥
कृष्णद्वैपायनप्रोक्तास्सुपुण्या विविधाः कथाः ।

इत्याद्युक्त्या, भारतप्रणयनं जनमेजयक्रतुपर्यवसानानन्तरकाल एवेति निश्चितं भवति, अन्यथा शौनकादिऋषीनुद्दिश्य सूतेनाभिहितार्थ-प्रतिपादकवचनसमुदायस्य भारतान्तःपातित्वं न कदापि सङ्घटते, तथा प्रवचनस्य असम्भवरूपदोषप्रसक्तिरप्यपरिहार्यैव भवेत्, अपरं च, श्रीमद्भागवते प्रथमस्कन्धीयद्वादशाध्यायमारभ्य यावत्स्कन्धपरि-समाप्ति, परीक्षीदितिहासएवाभिवर्णितः, तथैव विष्णुपुराणादिष्वपि दृश्यते, किं च, परीक्षिन्महीपालस्य पट्टाभिषेकः कलियुगप्रवेशा-दनन्तरकाल एव युधिष्ठिरेण कृत इति भागवतविष्णुपुराणभारतादिषु सर्वत्रापि श्रूयते, एतेन कलियुगादनन्तरकाल एव प्रथमसहस्रे श्रीम-द्भागवताद्यखिलग्रन्थप्रणयनं त्वेककाल एवाभूदिति निश्चीयते ॥

एवमेव क्रमेण पुराणान्तरेष्वपि प्रतिपादितविषयपर्यालोचनया, तत्र तत्राभिहित नरपालानां राज्यपरिपालनदशायामेव तदीयविचित्रचरित्रलेखनादिकं सम्भवतीत्यर्थस्सर्वजनसाधारणतया ह्यभ्युपगम्यो भवतीति बालिशस्यापि निश्चयज्ञानमुत्पद्यते, किं च, पुराणश्रोतॄणां परीक्षिदादीनां च पुराणप्रवक्तॄणां शुकसूतादीनां च, नामानि तत्तत्पुराणप्रणयनदशायां तद्ग्रन्थप्रणेतुर्न स्मृतिपथमारूढानि भवेयुः, तथैव व्यासमहर्षिप्रणीत एव ग्रन्थे तन्माहात्म्याद्यभिवर्णनं तत्स्तुतिश्च न तेनैव प्रत्यपादीति प्रवचनं न्याय्यं भवति किञ्चात्मस्तुतिं परगर्हां च वर्जयेदित्यापस्तम्बीयादिनिखिलधर्मशास्त्रेष्वात्मस्तुतेर्निषिद्धत्वात्, अपि च, स्वेन स्वमाहात्म्यानुवर्णने क्रियमाणे, इतरेषां तत्र यथार्थज्ञानं न कदापि निष्पद्यते, अतो हेतोस्तन्महर्षिप्रणीतनिखिलसद्ग्रन्थव्रातप्रतिपादिताखिलविषयेषु च मृषात्वज्ञानं तु स्थालीपुलाकन्यायादुत्पद्यते, तस्मान्निखिलपुराणेतिहासादिसद्ग्रन्थसमुदयरचनायाः वैयर्थ्यापत्तिर्दुर्वारैव भवेत्, अत एवात्र पूर्वोक्तप्रतिपादितयावत्सद्युक्तिसमुदयपर्यालोचनया निखिलपुराणप्रतिपादितविषयाणां परस्परवैषम्ये निर्णीते, सर्वग्रन्थसमरसतया सम्प्रदायार्थाविरोधेन च परमसिद्धान्तः प्रतिपाद्यते ॥

## ॥ सिद्धान्तसङ्ग्रहनिरूपणम् ॥

धर्माद्यखिलपुरुषार्थप्रदानन्तश्रुतिस्मृतीतिहासपुराणाद्यखिलसद्ग्रन्थानामनादिसिद्धानां, कालविशेषवैपरीत्यादिना समुत्सन्नतायां प्रसक्तायां श्रीमदादिनारायणस्स्वयमेव व्यासरूपेण सत्यवत्यां पराशरमहर्षेरवतीर्य

सर्वमपि श्रुतिकदम्बं च तथैव स्मृतिजालमप्युद्धधार-तत्रोद्धरणपद्धतिस्तु सुधीभिरेवमुन्नेया, तथा हि, ब्राह्मादिनिखिलपुराणसमुदये, तत्तदुपक्रमोपसंहारप्रकरणेषु प्रतिपादितरीत्या, महर्षिभिः पराशर, मार्कण्डेय, सनत्कुमारप्रभृतिभिरेवाखिलपुराणानि विरचितान्येवावर्तन्त, तेषां कालदेशवैपरीत्यादिना ह्युत्सन्नताप्रसक्तौ सत्यां कानिचित्पुराणानि भागशो विभ्रष्टानि, कानिचित्सर्गैर्विहीनानि, कानिचित्सन्दर्भसन्धायकविषयप्रतिपादकश्लोकैर्विरहितानि, कानिचिदसम्पूर्णत्वेन प्रणीतानि, कानिचिदन्ततो विभ्रष्टानि कानिचित्तत्र तत्र विविधदेशेषु भागशो विप्रकीर्णानि चैवं प्रकारेण विभ्रष्टनिखिलसद्ग्रन्थजातं स्वयमेव सम्यक्परिष्कृत्य, ततः परं तत्तत्पुराणग्रन्थानां सजातीयवृत्तिशय्यारीतिपाकवत्त्वेन शिष्यमूलतः उपोद्धातप्रकरणानि च, विषयानुक्रमपद्धतिश्च, तत्तत्पुराणघटितश्लोकनिर्णायकसंख्याश्च, निखिलपुराणानामनुक्रमणिकापादश्लोकांश्च, तत्तत्पुराणप्रवक्तृश्रावकानां परस्परं सञ्जातप्रश्नोत्तराणि चैवमादिभिस्तत्तत्संदर्भोचितग्रन्थप्रणयनैर्निखिलान्यपि पुराणानि परिष्कुरुतेति स्वशिष्येभ्यो रोमहर्षणप्रभृतिभ्यः आज्ञां दत्वा, तथा कारयामास, अतो हेतोस्सर्वेषामपि पुराणानां परिष्करणं त्वेककाल एवासीदिति निश्चीयते, तत्र पुराणजाते व्यासमहर्षिणा सर्वपुराणोत्कृष्टत्वेन निखिलोपनिषत्प्रतिपाद्यपरमतत्त्वार्थोपबृंहकत्वेन च श्रीमद्भागवतं स्वयमेव स महर्षिर्विरचय्य, स्वसुताय शुकायोपदिदेश, शुकस्तु परीक्षिते मुमुक्षवे ह्युपदिष्टवान्, तच्चापि भागवतमितरपुराणपरिष्करणानुसारेणैव शिष्यमुखाल्लोके प्रवर्तयामास,

तस्माच्छुकायोपदिष्टभागवतं तु परमतत्त्वापादकग्रन्थजातमेव नान्यदिति ज्ञेयम्, तमेव परमार्थं ततः परं सूतोऽपि शुकमुखादापाततः परिज्ञाय शौनकादिऋषीन् प्रत्यवादीत्, ततः परमेवैतत्सर्वमप्यालोच्य, शिष्यपरम्पराप्रतिपादकश्लोकरूपग्रन्थसम्मेळनेन रोमहर्षणादयः परिष्कृतवन्तः, तत्र, व्यासावतारप्रभावाद्यभिवर्णनादीनि च, शौनकादिऋषीणां स्तुतीश्च, तएव रचयामासुः ॥ अन्यथा पूर्वोक्तरीत्या निखिलपुराणेष्वनादिषु तत्र तत्र कलियुगप्रवेशानन्तरकालिकवृत्तान्तसमुदयानुप्रवेशस्य हेयत्वरूपदोषापत्तेः ॥

तस्मादेतस्य पुराणरत्नस्य, दशलक्षणलक्षितस्य ब्रह्मसूत्रार्थप्रकाशकस्य, महाभारतार्थनिर्णायकस्य, श्रीहयग्रीवब्रह्मविद्येत्यादिविलक्षणबिरुदाङ्कितस्य, वृत्रासुरवधादिविविधविचित्रपुण्यकथाप्रतिपादकस्य, साक्षात्प्रवक्ता भगवान् व्यासः, ब्राह्मादीतरपुराणानां तु प्रवक्तारस्त्वन्ये पराशरादयः, प्रवर्तकस्त्वयमेव भगवान् व्यास इति विवेकः, एवं च सति, द्वापरादाववतीर्णेन तेन परमतत्त्वापादकविषयजातप्रकाशकग्रन्थजाते, प्रणीते, ततःपरं जनिष्यमाण युधिष्ठिरपरीक्षित्प्रभृतिभूपतीनां कथाभिवर्णनेच्छा च, स्वात्मस्तुतिश्च न कदाप्यपेक्षितैव भवति, अपि तु ततःपरं तच्छिष्यैः, पैल, वैशम्पायन, जैमिनि, सुमन्तु, रोमहर्षण, वैशम्पायन, मैत्रेय, प्रभृतिभिस्तदाज्ञां पुरस्कृत्यैव लोकोपकाराय पठितॄणां प्रवृत्त्युत्पादनाय च, स्वगुरुमहिमानुवर्णनपुरस्सरं तत्तत्कालानुसारतः पुराणप्रवक्तुस्सूतस्य च श्रोतॄणां शौनकादीनां च नामानि तत्तद्धट्टेषु पूर्वोक्तरीत्या यथासन्दर्भं प्रतिपाद्य

निखिलानि पुराणानि परिष्कृतानीति विद्वद्भिरकुटिलदृष्टिभिः परमार्थस्त्वेवमाकलनीयः, न च, पञ्चमकक्ष्यायामभिवर्णितप्रकारेण, भारतप्रणयनानन्तरकालप्रणीतस्यैतस्य पुराणरत्नस्य तत्पूर्वकालिकपुराणसमुदये ह्यन्तर्भावः कथं वक्तुं शक्य इति वाच्यं, अत्र निगदितयुक्तिनिकुरुम्बनिर्धारितपरमसिद्धान्तार्थपर्यालोचनया भगवद्व्यासप्रणीत, भारत, भागवतादिसद्ग्रन्थानां च, तत्परिष्कृतब्राह्मादिपुराणादीनां च तदाज्ञानुसारेण रोमहर्षण, वैशम्पायन, जैमिन्यादिभिः पुनः कृतपरिष्करणं कलियुगादावेककालएव कृतमित्यर्थे निश्चिते, न मूढोऽप्यत्र समकालपरिष्कृतग्रन्थसमुदये, पौर्वापर्यविचारणां कर्तुं यतते, न च यत्र कुत्रापि वास्मत्सद्ग्रन्थव्राते, महाभारतप्रणयनात्पूर्वमेव निखिलपुराणपरिष्करणं तु निर्वृत्तमिति कण्ठोक्त्या लिखितं हि श्रूयते, किं तु श्लो. 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यानं कृपया मुनिना कृतम्' ॥ इत्यादिना, श्रीमद्व्यासमहर्षिणा विरचितशतपर्वक महाभारतप्रणयनानन्तरकाल एव, सरस्वतीनद्याः पश्चिमतटे शम्याप्रासादसंज्ञिकाश्रमे नारदोपदेशतस्तेन महर्षिणा परमतत्वापादकतया प्रणीतश्रीमद्भागवतार्थश्शुकमहर्षये ह्युपदिष्ट इत्यर्थस्स्पष्ट एवेति विद्वच्छिखामणयो विदां कुर्वन्तु ॥

किं च, सर्वज्ञैर्मनुयाज्ञवल्क्यप्रभृतिभिस्स्मृतिप्रवर्तकैः प्रतिपादितस्मृतिपरिष्करणेऽपीयमेव फक्किका त्वनुसृता दृश्यते तत्कथमित्युक्तौ, भगवान् सर्वज्ञो मनुर्निखिललोकोपकाराय मानवसंहिताख्यं धर्मशास्त्रं विरचय्य स्वशिष्याय भृगवे ह्युपदिदेश, स च भृगुस्तन्मुखा-

दधीत्य तत्र तत्र प्रतिपादनीय, मनुस्तुत्यादिकं सर्वमपि व्यरचयदिति परमनिष्कृष्टार्थस्तु समदृष्टिभिः पण्डितवरैर्निश्चेतव्य इत्याचक्ष्महे ॥

॥ एतदर्थोपष्टम्भकप्रमाणवचनानि, मनुस्मृत्यां प्रथमाध्याये ॥

इदं शास्त्रं तु कृत्वासौ मामेव स्वयमादितः ।
विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन् ॥

एतद्वोऽयं भृगुश्शास्त्रं श्रावयिष्यत्यशेषतः ।
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ॥

ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः ।
तानब्रवीदृषीन् सर्वान् महर्षीन् श्रूयतामिति ॥

अत्र ब्रह्मा मनवे धर्मशास्त्रमुपदिष्टवान् ॥ तदा शतसहस्रश्लोकपरिमितं धर्मशास्त्रं मनुना विरचितमासीत्, तत्तु मनोर्भृगुरधिजगे, ततो भृगुणा तदर्थं संक्षिप्य, इदं तु शास्त्रं विरचितमिति ज्ञेयम् ॥

अयमेव पन्थाः स्मृत्यन्तरेष्वपि तत्कर्तृभिरङ्गीकृत इति ज्ञेयं, श्लो. 'तत्र योगीश्वरं याज्ञवल्क्य मि'त्यादिस्मृतिप्रवक्तृस्तुतिपरवाक्यजातं सर्वमपि तच्छिष्यप्रणीतमित्यर्थे, न कापि विचिकित्सा कार्या, तथैव रामायणादिमहाकाव्येष्वपि, भरद्वाजप्रभृतिभिर्वाल्मीकिशिष्यैरेव तत्सन्दर्भोचितश्लोकाः केचन प्रणीता इत्यर्थोऽपि विद्वच्छिखामणिभिस्सादरमादरणीय इति सर्वमनवद्यम् ॥

असत्कीर्तनकान्तारपरिवर्तनपांसुलाम् ।
वाचं शौरिकथालापगङ्गयैव पुनीमहे ॥

श्रीमद्रामषडक्षरीमन्त्रराजोपासनालब्धसंस्कृतप्राकृतवैकृताद्यनेकभाषाविरचितनिखिलस्वतन्त्रप्रतिभाभासुरेण दम्पूरु वेङ्कटसुब्बाशास्त्रिणा विरचितायां, श्रीमदखिलास्तिकजनाङ्गीकृतश्रुतिस्मृतीतिहासपुराणादिसद्ग्रन्थप्रतिपादितपरमाद्वैतसिद्धन्तप्रकाशिकायां, भगवद्व्यासमहर्षिप्रणीतश्रीमद्भागवतपुराणरत्नपरिपालकसुवर्णपेटिकायां असम्प्रदायाधीतासद्ग्रन्थगन्धगर्वितवामाचारानुसारिशाक्तजनचपेटिकायां, श्रीमद्भागवतसिद्धान्तचन्द्रिकायां, शाक्तजनप्रलपितपञ्चकक्ष्योन्मूलनदम्भोळिप्रयोगो नाम सिद्धान्तग्रन्थस्समाप्तः ॥

न मया पक्षपातेन न स्तब्धत्वेन नाग्रहात् ।
रचितं किं तु तत्त्वं सुधीभ्यो ज्ञातुमिच्छया ॥
तत्त्वान्वेषणायातः प्रयतन्तु सदा बुधाः ।
दूषयन्तु च तेनाहं तत्त्वज्ञानमवाप्नुयाम् ॥
चमत्कृतिं मत्कृतेस्तु परिभाव्य स्वया धिया ।
हृष्यन्तु विबुधास्सर्वे रसास्वादनचेतसः ॥

अत्र चन्द्रिकायां प्रथमपुटे, चतुर्थपङ्क्तौ, यत्पादेत्यार्यान्तिमभागे "नमामि तुरङ्गवदनन्तमि"त्यस्य, "नमामीड्यचरणकमलन्तमि"ति प्रवचनं श्लाघ्यतरमिति मन्यामहे ॥

## ॥ श्रीकृष्णावतारकालनिर्णयविचारघट्टः ॥

श्रीमदाश्रितजनापन्निवारणैकपरायणो भगवानादिनारायणो भूभारापनोदनाय ब्रह्मरुद्रेन्द्रादिनिखिलदेवबृन्दैस्सम्प्रार्थितस्सन्, श्रीकृष्णस्वरूपेणावतीर्य, निखिलदुष्टजननिबर्हणशिष्टजनपरिरक्षणादिकं सर्वमपि निर्वर्त्य पुनर्ब्रह्मादिदेवगणप्रार्थितस्सन्, वैकुण्ठनगरं प्राप्तवान् ॥

तत्तादृगपरिमेयानन्यादृशानवद्यगुणप्रभावविनुतस्य भगवतश्श्रीकृष्णमूर्तेरवतारकालनिर्णयादिकमन्यूनानतिरिक्ततया साकल्येन भागवत, विष्णुपुराण, हरिवंशादिग्रन्थेषु न यत्र कुत्रापि कण्ठोक्त्या ह्यभिवर्णितम्, अपि तु, केषुचिद्ग्रन्थेषु, तदवतारघट्टे, तज्जननक्षत्रनिर्णयश्च, तदाविर्भूतनिशीथकालविशेषश्च प्रतिपादितौ, अन्येषु केषुचिद्ग्रन्थेषु तज्जननकाल प्रतिपादकमास, ऋतु, पक्ष, नक्षत्र, मुहूर्ता एव स्पष्टतरमभिवर्णिताः, न तु युगवर्षादयस्तु तत्रावतारघट्टे त्वभिवर्णिताः, अपि तु, पूर्वोक्तविष्णुपुराण, भागवत, हरिवंशादिग्रन्थेष्वेव केषुचिद्घट्टेषु युगवर्षादिनिर्णयस्तु विद्वज्जनैकवेद्यतया विविधवचनसमूहैस्सूचित एवाभूत्, तस्मात्तद्वचनार्थसूचितयुगवर्षादिनिर्णयापरिज्ञानाद्धेतोस्सभगवानादिनारायणस्वरूपश्श्रीकृष्णपरब्रह्ममूर्तिः, कस्मिन् युगे? कस्मिन् वत्सरे? ह्यवततारेति च, तदाविर्भूतवत्सरमारभ्य गतवत्सराः कत्यभवन्नि?ति च, मायामानुषविग्रहधारिणस्तस्य भूमाववस्थानकालः कियानि?ति चैवं विशेषतो विचिकित्सनीयविविधसन्देहसमुदयैस्सन्दिग्धमनस्कानां निखिलभगवद्भक्तानामत्यन्तोपकाराय, श्रीकृष्णपरब्रह्ममूर्त्यवतारकालनिर्णयप्रतिपादकभागवत, विष्णु-

पुराण, हरिवंशादिग्रन्थेष्वभिवर्णितनिखिलप्रमाणवचनाभिप्रायानुसारतः, सर्वग्रन्थार्थसमरसतया, निखिलभागवतजनानामपरिमितानन्दोत्पादनायात्र, श्रीकृष्णमूर्त्यवतारकालनिर्णयस्त्वेवमभिवर्ण्यते—तथा हि ॥

॥ श्रीमद्भागवतस्थदशमस्कन्धीयतृतीयाध्याये-
श्रीकृष्णावतारकालनिर्णायकप्रमाणवचने ॥

अथ सर्वगुणोपेतः कालः परमशोभनः ।
यर्ह्येवाजनजन्मर्क्षं शान्तर्क्षग्रहतारकम् ॥
मन्दं मन्दं जलधरा जगर्जुरनुसागरम् ।
निशीथे तमउद्भूते जायमाने जनार्दने ॥

अत्रोदाहृतश्लोकद्वये प्रथमश्लोकप्रतिपादिता "जनजन्मर्क्षमि" त्यनेन प्रजापतिदेवताकरोहिणीनक्षत्रमित्यभिहितं भवति, द्वितीयश्लोकप्रतिपादित "निशीथे तम उद्भूते" इत्यनेन तिमिरसम्मिळितनिशीथकाल इत्यर्थश्च स्पष्टतया प्रतिपादितो भवति ॥

एवं चेदत्र नक्षत्रनिशीथकालौ द्वावेवाभिहितौ, न युग, वर्ष, मास, पक्ष, तिथिप्रभृतयोऽत्रावतारघट्टे ह्यभिवर्णिताः ॥ किं च—

॥ श्रीमद्विष्णुपुराणीयपञ्चमांशे - प्रथमाध्याये-
योगमायां प्रति विष्णूक्तिः ॥

ततोऽहं सम्भविष्यामि देवकीजठरे शुभे ।
गर्भे त्वया यशोदायां गन्तव्यमविलम्बितम् ॥

प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि ।
उत्पत्स्यामि नवम्यां च प्रसूतिं त्वमवाप्स्यसि ॥

अत्रोदाहृतश्लोकद्वयेन प्रतिपादितैः, प्रावृट्काल, नभः कृष्णाष्टमीनिशाशब्दैः नवम्यां त्वं प्रसूतिमवाप्स्यसीत्यनेन च, वक्ष्यमाणहरिवंशग्रन्थस्थ "यामेव रजनीमि"त्याकारकप्रमाणवचनबलेन च, वर्षर्तौ, श्रावणमासे, नवमीविद्धायां कृष्णपक्षाष्टम्यां रात्रौ श्रीकृष्णपरब्रह्ममूर्तेर्मायामानुषविग्रहरूपेणाविर्भावो जात इत्यर्थस्स्पष्टतया प्रतिपादितो भवति ॥

॥ हरिवंशीयपूर्वभागे - अध्याये - २५ - योगनिद्रां प्रति - श्रीमन्नारायणोक्तिः ॥

अर्धरात्रे करिष्यामि गर्भमोक्षं यथासुखम् ।
अष्टमस्य तु मासस्य जातावावां ततस्समम् ॥
अहं यशोदां यास्यामि त्वं देवीं याहि देवकीम् ।
आवयोर्गर्भव्यत्यासे कंसो गच्छति मूढताम् ॥

अध्याये—

यस्मिन्नहनि देवेशं गर्भे चाधत्त देवकी ।
यशोदापि समाधत्त गर्भं तदहरेव हि ॥
विष्णोश्शरीरजां निद्रां विष्णोर्निर्देशकारिणीम् ।
गर्भकाले त्वसम्पूर्णे ह्यष्टमे मासि ते स्त्रियौ ॥
देवकी च यशोदा च सुषुवाते समं तदा ।

यामेव रजनीं कृष्णो जज्ञे वृष्णिकुले प्रभुः ॥
तामेव रजनीं कन्यां यशोदादेव्यजायत ।
अष्टम्यां श्रावणे मासे कृष्णपक्षे महातिथौ ॥
रोहिण्यामर्धरात्रे च सुधांशावुदयोन्मुखे ।
देवक्यजनयद्विष्णुं यशोदा तां तु कन्यकाम् ॥
मुहूर्तेऽभिजिति प्राप्ते ह्यर्धरात्रे सुखावहे ॥

तस्मिन्नेवाध्याये—

वसुदेवस्ततो गत्वा देवकीगर्भवेश्म तत् ।
ददर्श देवदेवेशं रात्रौ जातमधोक्षजम् ॥
शयानमाम्बुजे पत्रे वटपत्रे यथा पुरा ।
प्राचीनशिरसं देवं पश्चिमन्यस्तपादकम् ॥

एतद्वचनसमुदयपर्यालोचनया भागवत, विष्णुपुराणाभ्यामुदाहृतवचनप्रतिपादितमास, ऋतु, पक्ष, नक्षत्र, तिथि, रात्र्यादिकालस्वरूपपरिज्ञानादपि विशेषतः, तज्जननमुहूर्तस्त्वभिजिदित्यर्थश्च, देवकीयशोदाभ्यां श्रीकृष्णयोगमाययोर्जननमेकरात्र्यामेवाभूदित्यर्थश्च, तथाविधोत्पत्तिरष्टममासएवासीदित्यर्थश्च, अत एव श्रीकृष्णपरब्रह्ममूर्तिर्जननोत्तरक्षण एव, लोकाचारानुसारेण पद्मपत्रेष्वभिनिवेशित इत्यर्थश्च, तदा सूतिकागृहे शतकोटिसूर्यतेजसा, विभ्राजमानश्श्रीकृष्णरूपमायाशिशुः प्राग्दिङ्नियमितशिरस्कतया च, पश्चिमदिग्विन्यस्तपादयुगळतया च सन्निवेशित इत्यर्थश्चैवमादिविशेषास्सम्यग्विज्ञाता एव भवन्ति ॥

श्रीमद्भागवते, एकादशस्कन्धस्थ षष्ठाध्याये, श्रीकृष्णमूर्तिजीवित-कालनिर्णायकप्रमाणवचनं, श्रीकृष्णं प्रति ब्रह्मादिदेवोक्तिः ॥

यदुवंशेऽवतीर्णस्य भवतः पुरुषोत्तम ।
शरच्छतं व्यतीयाय पञ्चविंशाधिकं विभो ॥

एतद्वचनस्थैः, भवतः, पञ्चविंशाधिकं, शरच्छतं, व्यतीयायेति पदैः, श्रीकृष्णं वैकुण्ठनगरमानेतुमागतब्रह्मादिदेवप्रार्थनकाले भगवतश्श्रीकृष्णमूर्तेर्जन्मप्रभृतिव्यतीतसंवत्सरसंख्या तु पञ्चविंशोत्तरशतात्मिकेत्यर्थस्तु स्पष्टतया प्रतिपादितो भवति, एवमेव विष्णुपुराणादिष्वपि प्रतिपादित एव हि श्रूयते ॥ तथा हि—

श्रीविष्णुपुराणे, पञ्चमांशे, अध्याये, ३७,
॥ श्रीकृष्णं प्रति, इन्द्रप्रेषितदेवदूतोक्तिः ॥

वस्वश्विमरुदादित्यरुद्रसाध्यादिभिस्सह ।
विज्ञापयति शक्रस्त्वां तदिदं श्रूयतां प्रभो ॥
दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः ।
त्वया सनाथास्त्रिदशा भवन्तु त्रिदिवे पुनः ॥
पञ्चविंशत्युत्तरकं शतं तु शरदां गतम् ।
इदानीं गम्यतां स्वर्गो भवतो यदि रोचते ॥

अत्र पञ्चविंशत्युत्तरकं शतं तु शरदां गतम् इत्यनेन श्रीमद्भागवतोक्तक्रमेणैव पञ्चविंशत्युत्तरशतवत्सरा व्यतीता इत्यर्थः प्रतिपादितो भवति अनेनैव क्रमेण हरिवंशादिग्रन्थेष्वप्यभिवर्णितार्थस्सम्यक्तत्र तत्र द्रष्टव्यः, ग्रन्थविस्तरभयान्नात्र तदर्थप्रकाशकवचनान्युदाहृतानि ॥

## श्रीमद्भागवतैकादशस्कन्धस्थसप्तमाध्याये,
## श्रीकृष्णमूर्तिनिर्याणकालप्रतिपादकप्रमाणवचनानि ॥

समुद्रस्सप्तमेऽह्न्येनां पुरीं सम्प्लावयिष्यति ।
यर्ह्येवायं मया त्यक्तो लोकोऽयं नष्टमङ्गळः ॥
भविष्यत्यचिरात्साधो कलिनापि निराकृतः ।

एतद्वचनार्थपर्यालोचनया, ब्रह्मादिदेवगणप्रार्थनानन्तरकाल एव श्रीकृष्णमूर्तिना उद्धवमुद्दिश्य, ब्रह्मादिदेवागमनदिवसात्परं सप्तमदिवसे द्वारकानगरी समुद्रान्तर्लीना भविष्यतीति च, ततोऽव्यवहितकाल एव मयाप्ययं लोकस्त्यज्यत इति च, तदात्वएव कलिप्रवेशोऽपि भवतीति च, प्रतिपादितार्थस्सर्वैरपि विज्ञेय एव भवति, एतेन कलियुगप्रवेशस्य पूर्वस्मिन्नेव मासि श्रीकृष्णह्वानार्थं ब्रह्मादिदेवागमनं जातमित्यर्थश्च, श्रीकृष्णमूर्तिनिर्याणदिवस एव कलिप्रवशो जात इत्यर्थश्च सम्यगूह्यो भवति, अयमेवार्थो विष्णुपुराणेऽपि प्रतिपादितः॥ तथाहि—

## ॥ विष्णुपुराणे, चतुर्थांशे, अध्याये २४ ॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि ।
प्रतिपन्नं कलियुगं तस्य संख्यां निबोधत ॥

एतद्वचनार्थविवेचनया श्रीकृष्णपरब्रह्ममूर्तिनिर्याणदिवस एव कलिप्रवेशो जात इत्यर्थावगमेन पूर्वोदाहृतभागवतपुराणवचनसूचितार्थस्यातीव सामरस्यं सङ्गच्छत इति निश्चिनुमः ॥

किं च, श्रीकृष्णपरब्रह्ममूर्तिं पुनर्वैकुण्ठमानेतुमागतैर्ब्रह्मादिदेवैरुद्दिष्टपञ्चविंशत्युत्तरशतवर्षाः व्यवहार्यमाणदैववत्सरा एव भवितुमर्हन्ति, नैतल्लोकव्यवहार्यमाण सौर, चान्द्र, बार्हस्पत्य, सावन, नाक्षत्राख्यपञ्चविधवत्सरेष्वन्तर्भूता भवितुमर्हन्तीति महत्याक्षेपे सति, सप्रमाणकैरकुटिलार्थकैर्वचनैस्सम्प्रदायार्थाविरोधेन परमसिद्धान्तः प्रकाश्यते ॥ तथा हि—

॥ विष्णुपुराणस्थ, पञ्चमांशीयत्रयोविंशाध्याये
श्रीकृष्णं प्रति मुचिकुन्दोक्तिः ॥

मुचिकुन्दश्च तत्रासौ वृद्धगर्गवचस्स्मरन् ।
संस्मृत्य प्रणिपत्यैनं परं सर्वेश्वरं हरिम् ॥
प्राह ज्ञातो भवान् विष्णोरंशस्त्वं परमेश्वर ।
पुरा गर्गेण कथितमष्टाविंशे महायुगे ॥
द्वापरान्ते हरेर्जन्म यदुवंशे भविष्यति ॥ इति

एतद्वचनार्थस्य साकल्येन परिचिन्तनया जगत्सृष्टिमारभ्यानुसृतवत्सरसमुदये ह्यष्टाविंशतितममहायुगान्तःपरिवर्तमानद्वापरयुगस्यान्तिमभागे, यदुवंशे, श्रीभगवान्, नारायणोऽवतरिष्यतीति, पूर्वं वृद्धगर्गैरभाणीति, मुचिकुन्दश्श्रीकृष्णमूर्तिं प्रत्यवोचदित्यर्थावगमेन, ब्रह्मादिदेवैरुद्दिष्टवत्सरास्तु न ब्रह्मलोके व्यवहारोपयुक्तदैवसंवत्सराः, अपि तु, ऐहिकव्यवहारोपयुक्तप्रभवादिसंवत्सरा एवेत्यर्थो निश्चेतव्यो भवति, किं च, श्रीकृष्णं प्रति मुचिकुन्दोक्तरीत्या, अष्टाविंशतितम-

महायुगान्तर्वर्तिद्वापरयुगं तु वर्तमानकलियुगाव्यवहितपूर्वयुगमेव भवितुमर्हतीत्यर्थे प्रमाणवचनानि प्रकाशयामः ॥ तथा हि—

॥ सूर्यसिद्धान्ते, प्रथमाध्याये ॥

आयुषोऽर्धं गतं तस्य शेषात्कल्पोऽयमादिमः ।
कल्पादस्माच्च मनवष्षड्व्यतीतास्ससन्धयः ॥
अष्टाविंशयुगादस्माद्यातमेतत्कृतं युगम् ।
अतः कालं प्रसङ्ख्याय सङ्ख्यामेकत्र पिण्डये ॥ इति

अत्र अष्टाविंशयुगादस्मादित्यस्य, अष्टाविंशतितममहायुगादिति व्याख्याकर्तृभिरभिहितं, अन्यथा तत्रैव यातमेतत्कृतं युगमिति शब्दस्य अष्टाविंशतितममहायुगान्तःपातित्वं न सङ्घटेत, तस्मात्सूर्यसिद्धान्तग्रन्थसिद्धान्तितपरमसिद्धान्तानुसारेण वर्तमानमहायुगं त्वष्टाविंशतितममहायुगमेव भवितुमर्हतीत्यत्र न कोऽपि विशयः कार्यः ॥

एतेन, द्वापरान्ते हरेर्जन्म यदुवंशे भविष्यतीत्यादिपूर्वोदाहृतवचनसमुदयस्यातीव सामरस्यं सङ्घटत इति निश्चिनुमः, तस्मात्पूर्वं ब्रह्मादिदेवैरुद्दिष्टवत्सरसङ्ख्यास्त्वैहिकव्यवहारोपयुक्तप्रभवादिसंवत्सरात्मिकैव, नैवामुष्मिकव्यवहारोपयुक्तदैवसंवत्सरात्मिकेति ज्ञेयम् ॥

अतो हेतोर्ब्रह्मादिदेवैरुद्दिष्टवत्सरास्तु ब्रह्मलोकव्यवहार्यमाणदैववत्सरा इति कापुरुषैरभ्युदीरितकुशङ्कासमुदयस्यात्र न कोऽप्यवकाश इति सुधियो विजानन्तु तराम् ॥ किं च—

॥ भागवते, दशमस्कन्धे, अध्याये, ५१.
श्रीकृष्णं प्रति मुचिकुन्दोक्तिः ॥

इत्युक्तस्तं प्रणम्याह मुचिकुन्दो मुदान्वितः ।
ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मरन् ॥

अत्र गर्गवाक्यमनुस्मरन्निति शब्दव्याख्यानावसरे, भगवता, श्रीधराचार्येण, अष्टाविंशतितमे महायुगे, यदुवंशे भगवानवतरिष्यतीति वृद्धगर्गवाक्यमनुस्मरन्नित्यर्थ इति व्याख्यातं, तस्मादष्टाविंशतितम-महायुगान्तर्वर्तिद्वापरयुगं तु वर्तमानकलियुगाव्यवहितपूर्वयुगमेव भवितुमर्हतीत्यर्थे न कापि विचिकित्सा कार्या ॥

एवं, श्रीमद्भागवत, विष्णुपुराण, हरिवंशादिशिष्टजनाङ्गीकृत-सद्ग्रन्थाभ्युदीरितपरमार्थस्य सममेकतया यथासम्प्रदायं पर्यालोचनायां कृतायां, सर्वस्यापि सन्देहसमुदयस्य, सामरस्यमतीव श्लाघ्यतमत्वने निर्बाधकतया च, लभ्यत एवेति विशिष्टशिष्टजनसिद्धान्तितपरमार्थ-प्रवचने वयमतीव दृढचित्ता भवामेत्याचक्ष्महे ॥

तस्मान्निखिलचराचरपोषणैकायत्तचित्तस्य भगवतोह्यवतार-लीलाविशेषान् प्रति कुमतप्रविष्टकापुरुषैः क्रियमाणकुत्सिताक्षेपास्स्व-सम्प्रदायाधीतापरिपूर्णग्रन्थार्थपरिज्ञानप्रयुक्ताविवेकमूला एवेति सुधियो विदां कुर्वन्तु ॥

## ॥ निष्कृष्टाभिप्रायविवेचना ॥

पूर्वोक्तक्रमानुसारेण, भागवत, विष्णुपुराण, हरिवंशादिसद्ग्रन्थ-प्रतिपादिताखिलप्रमाणवचनार्थपर्यालोचनया निष्कृष्टपरमाभिप्रायस्तु करतलामलकवन्निखिलभागवतजनवेद्यतया सङ्ग्रहेणात्र प्रकाश्यते, तथा हि, चतुष्षष्टिसहस्रोत्तरलक्षाष्टकपरिमितिद्वापरयुगसंवत्सरेषु मध्ये चतुस्सप्तत्युत्तराष्टशताधिकत्रिषष्टिसहस्रोत्तराष्टलक्षपरिमितहायनेषु च, मासचतुष्टये च, एकविंशतिदिनेषु च गतेषु सत्सु, तात्कालिकव्यवहारयोग्य, स्वभानुसंवत्सरश्रावणमासासितपक्षनवमीविद्धाष्टम्यां रात्र्यां निशीथवेळायां, वृषभलग्नसम्भूताभिजिताख्यसुमुहूर्ते, श्रीमदादिनारायणपरब्रह्ममूर्तिर्लीलागृहीतशरीरस्सन् देवकीदेव्याः गर्भत आविर्बभूव ॥ तदुत्पत्त्यनन्तरकाल एव स मायाशिशुः प्राग्दिङ्नियमितशिरस्कतया च पश्चिमदिग्विन्यस्तपादयुगळतया च पद्मपत्रेषु सन्निवेशितः तदा स परमपुरुषश्चतुर्बाहुतया च, शङ्खचक्राद्यायुधवत्तया चाधिकतेजःपुञ्जदीपितसूतिकागृहस्सन् विरराज तात्कालिकव्यवहारोपयुक्तस्वभानुसंवत्सरश्रावणबहुळाष्टमीप्रभृति वर्तमानराक्षससंवत्सर पुष्यशुद्धप्रतिपत्तिथ्यवधितया परिगणने क्रियमाणे, गतसंवत्सराः, एकाशीत्युत्तरपञ्चसहस्राण्यभवन्, तदुपरि, मासस्तु, एकः दिनानि चत्वार्यासन्, किं च, तस्यानादिनिधनस्य पुरुषोत्तमस्य मायामानुषदेहधारितयावस्थानकालस्तु सार्धाष्टदिवसोत्तरसप्तमासाधिकपञ्चविंशत्युत्तरशतवत्सरात्मक इति निश्चेतव्यः, तत्परिगृहीतमायामानुष-

विग्रहपरित्यागदिवसस्तु प्रमादिसंवत्सरचैत्रशुद्धप्रतिपदेव भवति, निखिलजगन्निर्माणालङ्कर्मीणप्रभावविनुतस्य निर्याणात्परतो गतसंवत्सराः षट्पञ्चाशदुत्तरनवशताधिकचतुस्सहस्रसंख्यापरिमिता एवासन्, श्रीकृष्णपरब्रह्ममूर्तिन आविर्भूताष्टमीदिवस एव नवमीविद्धघटिकायां तु यशोदागर्भे योगमाया जातेति निश्चितत्वाद्योगमाया श्रीकृष्णमूर्त्यनुजेत्यत्र न कापि शङ्केति सर्वमनवद्यम् ॥



## श्रीमदखिलोपनिषत्प्रतिपाद्यपरमतत्त्वार्थप्रतिपादक-
## श्रीमद्भागवतग्रन्थस्य नवमस्कन्धप्रतिपादित-
## यादववंशानुक्रमणिकात्र स्पष्टतरं
## सङ्ग्रहेण प्रकाश्यते—

अनिर्वचनीयमहिम्नोऽव्यक्तात्परमात्मनश्चतुर्मुखब्रह्मा, व्यक्तीभूतस्सन्नुदभूत्, तस्मादत्रिरजनि, तस्य दृग्भ्यः अमृतमयस्सोमस्तूत्पन्नः, तस्य बृहस्पतिभार्यायां तारायां बुधो नामातिसुन्दरतनुस्तद्ंशज उदभूत्, तस्य बुधस्य इळायां, पुरूरवा नाम राजश्रेष्ठस्समजायत, तस्य पुरूरवसः ऊर्वश्यां, आयुः श्रुतायुः, सत्यायुः रयः, विजयः, जय इति षट्पुत्रा आसन्, एतेषु सर्वज्येष्ठस्य आयुषः नहुषः, क्षत्रवृद्धः, रजः, रम्भः अनेना इति पञ्चपुत्रास्समजायन्त, तेष्वग्रजातस्य नहुषस्य, यतिः, ययातिः, वियतिः, कृतिः, इत्येवं षट्पुत्रा उदभूवन्, तेषु ययातेः दैत्यगुरुतनूजायां देवयान्यां यदुतुर्वसू, वृषपर्वतनूभवायां शर्मिष्ठायां द्रुह्यु, अनु, पूरुनामानश्च समजायन्त, तत्र यदोर्महात्मनः परमभागवतसार्वभौमस्यान्ववाये सञ्जातस्य परमभक्तिसमाराधिताखिलदेवस्य वसुदेवस्य, परमभागवतशिखामणेः देवराजकन्यायां देवक्यां, अखिलचराचरनिर्माणालङ्कर्मीणनिखिलकल्याणगुणगणाकरो भगवानादिनारायणस्त्ववततार, तस्मान्निखिलकलिकल्मषान्धकारनिर्हरणभास्करायमाणयदुवंशस्य वाक्यरूपतस्सङ्ग्रहेणानुवर्णनमखिलभगवद्भक्तजनोल्लासजनकं भवेदिति मनीषयात्र भागवतोक्तानुक्रमेणानुवर्ण्यते ॥

## ॥ यादववंशानुक्रमणिका ॥



यदोः-सहस्रजित्, क्रोष्टुः, नलः, रिपुः, इति चत्वारस्सूनव उदभूवन्.

सहस्रजितः-शतजित् समजनि

शतजितः-महाहयः, वेणुहयः, हेहयः, इति पुत्रास्त्रय उत्पन्नाः.

हेहयस्य-धर्मस्सञ्जातः, एतस्यैव नेत्र इत्यपरं नाम विष्णुपुराणेह्यस्य धर्मनेत्र इत्युक्तं

धर्मस्य-कुन्तिः

कुन्तेः-सोभञ्जिः

सोभञ्जेः-महिष्मान्

महिष्मतः-भद्रसेनकः

भद्रसेनकस्य-दुर्मदः, धनिकः इति द्वौ पुत्रौ

धनिकस्य-कृतवीर्यः, कृताग्निः, कृतवर्मा, कृतौजाः इति चत्वारः पुत्राः

कृतवीर्यस्य-अर्जुनः

कार्तवीर्यार्जुनस्य-पुत्रसहस्रमुत्पन्नं, तत्र परशुरामनिहतेभ्य अवशिष्टाः जयध्वजः, शूरसेनः, वृषणः, मधुः, ऊर्जितः इति पञ्चपुत्राः

जयध्वजस्य-ताळजङ्घ इत्येकः पुत्रः

ताळजङ्घस्य-पुत्रशतं त्वासीत्, तत्र ज्येष्ठो वीतिहोत्रः

वीतिहोत्रस्य-वृकणः

वृकणस्य-मधुः

मधोः-वृष्णिप्रमुखं पुत्रशतं त्वासीत्, ते तु माधवाः, यादवा इत्यपि संज्ञिता भवन्ति, वृष्णिवंशजातास्तु वृष्णयः इति व्यवहृता भवन्ति

वृजिनवतः-श्वाहितः पुत्रः

श्वाहितस्य-भेरुशेकुःपुत्रः

भेरुशेकोः-चित्ररथः पुत्रः

चित्ररथस्य-शशिबिन्दुः पुत्रः, अस्य पृथुः विदूरथाद्या अपि पुत्राः तथोत्तरग्रन्थे ह्यभिहितत्वात्

शशिबिन्दोः-दशलक्षापरिमिताः पुत्राः, तेषां मध्ये पृथुयशाः, पृथुकर्मा, पृथुजयः, पृथुश्रवाः, पृथुकीर्तिरित्येते प्रधानपुत्राः

पृथुश्रवसः-उशनाः, एतस्यैव धर्म इत्यपरं नाम

उशनसः-रुचक इति पुत्रः

रुचकस्य-पुरुजित्, द्रुमः, रुक्मेषुः, पृथुः, ज्यामघ इति पञ्चपुत्राः

ज्यामघस्य-शैब्यायां विदर्भ इति पुत्रः

विदर्भस्य स्नुषा कन्यायां-कुशः, क्रथः, रोमपाद इति पुत्रत्रयमुदभूत्

रोमपादस्य-बभ्रुः पुत्रः

बभ्रोः-कृतिः

कृतेः-उशिकःपुत्रः, तस्यैव कौशिक इत्यपरं नाम

उशिकस्य-चेदिः

चेदेः-चैद्यादयो भूपाला आसन्

स्नुषापुत्रस्य क्रथस्य-कुन्तिः पुत्रः

कुन्तेः-धृष्टिः

धृष्टेः-निर्वृतिः

निर्वृतेः-दशार्हः

दशार्हस्य-व्योमः

व्योमस्य-जीमूतः

जीमूतस्य-विकृतिः

विकृतेः-भीमरथः

भीमरथस्य-नवरथः

नवरथस्य-दशरथः

दशरथस्य-शकुनिः

शकुनेः-कुन्तिः

कुन्तेः-देवरातः

देवरातस्य-देवक्षत्रः

देवक्षत्रस्य-मधुः

मधोः-कुरुवशः

कुरुवशस्य-अनुः

अनोः-पुरुहोत्रः

पुरुहोत्रस्य-अंशुः

अंशोः-सात्त्वतः

सात्त्वतस्य-भजमानः, भजिः, दिव्यः, वृष्णिः, देवावृधः, अन्धकः, महाभोजः, इत्येते सप्तपुत्राः

भजमानस्य-एकस्यां भार्यायां निम्रोचिः, कङ्कणः, वृष्णिः, अन्यस्यां भार्यायां, शतजित्, सहस्रजित्, अयुतजित्, एते षट्पुत्राः

सात्त्वतपुत्रेषु पञ्चमस्य देवावृधस्य—बभ्रुः

महाभोजस्य-वंश्याभोजा इति व्यवहृताः अभवन्

भजमानपुत्रेषु तृतीयस्य वृष्णेः, सुमित्रः, युधाजिदिति द्वौ पुत्रौ

युधाजितः-शिनिः, अनमित्र इति द्वौ पुत्रौ

अनमित्रस्य-निम्नः, शिनिरिति द्वौ पुत्रौ पृश्निरित्यप्येकः

निम्नस्य-सत्राजितः-प्रसेनः, इति द्वौ पुत्रौ

अनमित्रद्वितीयपुत्रस्य शिनेः-सत्यकः

सत्यकस्य-सात्यकिः, अस्यैव युयुधानः इति नाम
सात्यकेः-जयः
जयस्य-कुणिः
कुणेः-युगन्धरः
अनमित्रतृतीयपुत्रस्य पृश्नेः-श्वफल्कः, चित्रकः, इति द्वौ पुत्रावासतुः
श्वफल्कस्यगान्दिन्यां-अक्रूरः, असङ्गः, सारमेयः, मृदुकः, मृदुपत्, शिवः, वर्मधृक्, धृष्टवर्मः, क्षत्रोपेक्षः, शत्रुघ्नः, गन्धमादः, प्रतिबाहुः, इत्येवं द्वादश पुत्रा आसन्, सुचारुनाम्न्येका कन्या चाप्यजायत
अक्रूरस्य-देवलः, अनुपदेवः
पूर्वं प्रतिपादितस्य भेरुशेकुपुत्रस्य चित्ररथस्य-पृथु, विदूरथाद्याजाताः एते वृष्णय इत्यपि व्यवहृताः
सात्त्वतसुतस्य-अन्धकस्य, कुकुरः, भजमानः, शुचिः, कम्बळबर्हिष इति चत्वारअन्धकसुताः, एते वृष्णय इत्यपि व्यवहृताः
कुकुरस्य-वृष्णिः
वृष्णेः-विलोमा
विलोम्नः-कपोतरोमा
कपोतरोम्णः-अनुः
अनोः-दुन्दुभिः, अत्र, अनोरन्धकः तस्य दुन्दुभिरिति विष्णुपुराणे प्रतिपादिते, तदनुसारेण अनोरपत्यमन्धक इति ज्ञेयम्
दुन्दुभेः-दविद्योतः, पुनर्वसुरिति द्वौ पुत्रौ
दविद्योतस्य-आहुक इत्येकः पुत्रः, आहुकीचेत्येका कन्या
आहुकस्य-देवकः, उग्रसेनः इति द्वौ पुत्रौ
देवकस्य-देवलः, अनुपदेवः, सुदेवः, देववर्धनः, इति चत्वारः पुत्रा उदभूवन् धृतदेवा, शान्तिदेवा, उपदेवा, श्रीदेवा, देवरक्षिता, सहदेवा, देवकी, इति सप्तकन्यका आसन्
उग्रसेनस्य-कंसः, सुनामा, न्यग्रोधः, कह्वः, शङ्कुः सुभूः राष्ट्रपालः, विसृष्टः, तुष्टिमानिति, नवपुत्राः, कंसा, कंसवती, कङ्का, सुरभूः, राष्ट्रपालिका चेति पञ्च दुहितरः, एता वसुदेवानुजन्मनां देवभागादीनां भार्याः
अन्धकसुतेषु द्वितीयस्य-भजमानस्य, विदूरथः
विदूरथस्य-शूरः
शूरस्य-शिनिः
शिनेः-भोजः

भोजस्य-हृदिकः

हृदिकस्य-देवमीढः, शतधनुः, कृतवर्मा चेति त्रयः पुत्राः

देवमीढस्य-मारिषानाम कन्यायां वसुदेवः, देवभागः, देवश्रवाः, आनकः, सृञ्जयः, श्यामकः, कङ्कः, अनीकः वत्सकः, वृकः इति दशपुत्रा उदभूवन्, वसुदेवस्यैवानकदुन्दुभिरित्यपरं नाम पृथा, श्रुतदेवा, श्रुतकीर्तिः, श्रुतश्रवाः, राजाधिदेवीति पञ्चकन्याश्चासन्, एतासु पञ्चसु पृथया विवाहात्पूर्वमेव, दुर्वाससोपदिष्टदेवताकर्षणविद्यापरीक्षार्थं तया तु, रविराकृष्टः, तदा रविस्स्वांशन्तस्यागर्भे समाधाय गतः तस्मादेव कानीनः कर्णस्तस्यामुदभूत्, ततःपरं, पृथातु पाण्डवे दत्ता, श्रुतदेवातुकारूषायदत्ता तस्यामेव दन्तवक्रस्समजनि, तस्यैव दन्तवक्त्र इत्यपरं नाम, धृष्टकेतुः श्रुतकीर्तिमुवाह, तस्याः प्रतर्दनादयः पञ्च उदभूवन्, राजाधिदेव्याञ्जयत्सेनात् विन्दानुविन्दावुदभूतां, दमघोषः श्रुतश्रवसमुवाह, तस्यां शिशुपालः उदभूत्

देवभागस्य कंसायां-चित्रकेतुः, बृहद्बलश्चेति द्वौ पुत्रौ

देवश्रवसः कंसवत्यां-सुवीरः, इषुमानिति द्वौ पुत्रौ

कङ्कस्य कङ्कायां-बकः, सत्वजित्, पुरुजिदिति पुत्रत्रयमुदभूत्

सृञ्जयस्य राष्ट्रपाल्यां-वृषः दुर्मर्षणः अन्ये च केचन पुत्राः

श्यामकस्य सुरभूम्यां-हरिकेशः हिरण्याक्ष इति द्वौ पुत्रौ

वत्सकस्य मिश्रकेश्याख्याप्सरसि-वृकःप्रभृति पुत्रास्समभूवन्

वृकस्य दूर्वाक्ष्यां-तक्षः, पुष्करः, साल्वः, एतत्प्रभृति पुत्रास्समजायन्त

अनीकस्य कर्णिकायां-ऋतधाम, जयाख्यौ द्वौ पुत्रौ

वसुदेवस्य-पौरवी, रोहिणी, भद्रा, मदिरा, लोचना, इळा, देवकीप्रमुखाः पत्न्यआसन् भद्राया एव कौसल्येत्यपरं नाम

तत्र भार्यासु पौरव्यां-सुभद्रः, भद्रबाहुः, दुर्मदः भद्रः, भूतः अन्ये च सप्ततनयाः

रोहिण्यां-बलः, गदः, सारणः, दुर्मदः, विपुलः, ध्रुवः, कृतः अन्ये च केचन जाताः

मदिरायां-नन्दः, उपनन्दः, कृतकः, शूरः अन्ये च केचन जाताः

भद्रायां-केशीनामैक एवाभूत्

रोचनायां-हस्तः, हेमाङ्गदः अन्ये च केचन जाताः

इळायां-उरुवल्कः, अन्ये च केचन जाताः

धृतदेवायां-त्रिपृष्ठ इत्येक एवजातः

शान्तिदेवायां-प्रश्रमः, प्रश्रितः, अन्ये च केचन जाताः

उपदेवायां-कल्पवृष्टिप्रभृति दशराजानो जाताः

श्रीदेवायां-वसुः, हंसः, सुधन्वा अन्ये च त्रयः पुत्रा आसन्

देवरक्षितायाः-गदप्रभृति नवपुत्रा आसन्

सहदेवायां-पुरूढ, श्रुतमुख्याः अष्टपुत्राः उदभूवन्

देवक्यां-कीर्तिमान्, सुषेणः, भद्रसेनः, ऋजुः, समदनः, भद्रः, सङ्कर्षणः, श्रीमन्नारायणांशसम्भूतश्श्रीकृष्णश्चे-त्यष्टौ पुत्रा अभवन् सुभद्रानामकन्य-का चोदभूत्

लीलागृहीतविग्रहस्य श्रीकृष्णपरब्रह्ममूर्तेः, दाराः, अष्टोत्तर-शताधिकषोडशसहस्रसङ्ख्याका आसन्, तासां मध्ये प्रधानभूताह्यष्ट-भार्या अवर्तन्त, तासु चान्यास्वप्येकैकस्यां दश पुत्राह्युदभूवन्, एव-मष्टोत्तरशताधिकषोडशसहस्रमहिषीणां, साकल्येन परिगणने, पुत्राः अशीत्युत्तरैकषष्टिसहस्रादिलक्षापरिमिता ह्यासन् ॥ तेषु च पुत्रेषु महारथाः, प्रद्युम्नः, अनिरुद्धः, दीप्तिमान्, भानुः, साम्बः, मित्रः, बृहद्भानुः, वृकः, अरुणः, पुष्करः, देवबाहुः, श्रुतदेवः, सुनन्दनः, चित्रभानुः, वरूधः, कविः, न्यग्रोधः, किं च, त्रिवक्रायामुपक्रोशो-नाम पुत्रस्सञ्जातः, स तु कृष्णमनुव्रतस्सन् नारदोपदेशतः, स्त्रीशूद्रदासानां वैष्णवसंस्कारप्रतिपादकं मुक्तिहेतुकं सात्वतशास्त्रं रचयामास ॥

---

तेषां त्वष्टादशसुतानां मध्ये प्रद्युम्नस्तु प्रथमः गुणैश्चोत्तमस्सन् स्थितः, तस्य वंशवर्णनमेवं प्रकाश्यते—

श्रीकृष्णस्य रुक्मिणीदेव्यां-प्रद्युम्नः
प्रद्युम्नस्य रुक्मिदुहितरि-अनिरुद्धः
अनिरुद्धस्य रुक्मि पौत्र्यां-वज्रः
वज्रस्य-प्रतिबाहुः
प्रतिबाहोः-सुबाहुः
सुबाहोः-उग्रसेनः
उग्रसेनस्य-शतसेनः

एवमेव क्रमेणान्येषां च पुत्रा असङ्ख्याका बहवश्चोत्पन्नाः, तेषां गृहाचार्याः सङ्ख्यायां षोडशसहस्रोत्तरकोटित्रयपरिमिताः अभवन्, एवं गृहाचार्यसङ्ख्यायामगणनीयायां सत्यां तदाचार्याध्यापितानां श्रीकृष्णवंशप्रसूतानां सङ्ख्या न केनापि वक्तुं, श्रोतुमूहितुं, परिसङ्ख्यातुं च शक्यत इति सर्वमनवद्यम् ॥

॥ ओं - तत्सत् ॥

॥ श्रीमद्भागवतसिद्धान्तचन्द्रिका समाप्ता ॥

---

ॐ

॥ नमो भगवते वासुदेवाय ॥

# ॥ श्रीमद्भागवतम् ॥



## प्रथमस्कन्धे प्रथमोऽध्यायः

---

(नैमिषेयोपाख्यानम्)

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो[1]ऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १

धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वा परैरीश्वरः
सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥ २

निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रव[2]संयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥ ३

---

1 मृषा  2 सम्मितम्

नैमिषेऽनिमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ॥ ४

त एकदा तु मुनयः प्रातर्हुतहुताग्नयः ।
सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ ५

ऋषयः—

त्वया खलु पुराणानि सेतिहासानि चानघ ।
आख्यातान्यप्यधीतानि धर्मशास्त्राणि यान्युत ॥ ६

यानि वेदविदां श्रेष्ठो भगवान्बादरायणः ।
अन्ये च मुनयः सूत परावरविदो विदुः ॥ ७

वेत्थ त्वं सौम्य तत्सर्वं तत्त्वतस्तदनुग्रहात् ।
ब्रूयुः स्निग्धस्य शिष्यस्य गुरवो गुह्यमप्युत ॥ ८

तत्र तत्राञ्जसाऽयुष्मन्भवता यद्विनिश्चितम् ।
पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसि ॥ ९

प्रायेणाल्पायुषः [1]सभ्य कलावस्मिन्युगे जनाः ।
मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ १०

भूरीणि भूरिकर्माणि श्रोतव्यानि विभागशः ।
अतः साधोऽत्र यत्सारं समुद्धृत्य मनीषया ॥ ११

ब्रूहि नः श्रद्धानानां येनात्मा सम्प्रसीदति ॥ ११॥

सूत जाना[2]मि भद्रं ते भगवान्सात्वतां पतिः ।

---

1 सर्वे 2 सि

देवक्यां वसुदेवस्य जातो यस्य चिकीर्षया ॥ १२॥

तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णि[1]तुम् ।
यस्यावतारो भूतानां क्षेमाय च भवाय च ॥ १३॥

आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन् ।
ततः सद्यो वि[2]युज्येत यद्बिभेति स्वयं भयम् ॥ १४॥

यत्पादसंश्रयाः सूत मुनयः प्रशमाय[3]नाः ।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोनुसेवया ॥ १५॥

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहम् ॥ १६॥

तस्य कर्माण्युदाराणि परिगीतानि सूरिभिः ।
ब्रूहि नः श्रद्दधानानां लीलया दधतः कलाः ॥ १७॥

अथाख्याहि हरेर्धीमन्नवतारकथाः शुभाः ।
लीला विदधतः स्वैरमीश्वरस्यात्ममायया ॥ १८॥

वयं तु न वितृप्याम उत्तमश्लोकविक्रमे ।
यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे ॥ १९॥

कृतवान्किल वीर्याणि सह रामेण केशवः ।
अतिमर्त्यानि भगवान्गूढः कपटमानुषः ॥ २०॥

कलिमागतमाज्ञाय क्षेत्रेऽस्मिन्वैष्णवे वयम् ।
आसीना दीर्घसत्रेण कथायां सक्षणा हरेः ॥ २१॥

---

1 त 2 मुच्येत 3 नः

त्वं नः सन्दर्शितो धात्रा दुस्तरं निस्तितीर्षताम् ।
कलिं सत्वहरं पुंसां कर्णधार इवार्णवम् ॥ २२॥

ब्रूहि योगेश्वरे कृष्णे ब्रह्मण्ये धर्मवर्मणि ।
स्वां काष्ठामधुनोपेते धर्मः कं शरणं गतः ॥ २३॥

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्रिकायां
संहितायां प्रथमस्कन्धे प्रथमोऽध्यायः ॥

## ॥ द्वितीयोऽध्यायः ॥

व्यासः—

इति सम्प्रश्नसंहृष्टो विप्राणां रौमहर्षणिः ।
प्रतिपूज्य वचस्तेषां प्रवक्तुमुपचक्रमे ॥ १

सूतः—

यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽभिनेदु-
स्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ २

यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्[1]षतां तमोन्धम् ।
संसारिणां करुणयाह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥ ३

1 रषतां

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं [1]चैव ततो जयमुदीरयेत् ॥ ४

मुनयः साधु पृष्टोऽहं भवद्भिर्लोकमङ्गलम् ।
यत्कृतः कृष्णसम्प्रश्नो येनात्मा सुप्रसीदति ॥ ५

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा सम्प्रसीदति ॥ ६

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ ७

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् ॥ ८

[2]धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ॥ ९

कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः ॥ १०

वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ ११

तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।

---

1 व्यासं

2 श्रुतमप्यौपनिषदं दूरे हरिकथामृतात् ।
यन्न सन्ति द्रवच्चित्तप्रेमाश्रुपुलकोद्गमाः ॥　　[इति क्वचिदधिकः पाठः]

पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥ १२

अतः पुम्भिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।
स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ १३

तस्मादेकेन मनसा भगवान्सात्वतां पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥ १४

यदनुध्यासिना युक्ताः कर्मग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदास्तस्य को न कुर्यात्कथारतिम् ॥ १५

शुश्रूषोः श्रद्दधानस्य वासुदेवकथा[1]रुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥ १६

शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम् ॥ १७

नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥ १८

तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥ १९

एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥ २०

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे ॥ २१

---

1 रतिः

अतो वै कवयो नित्यं भक्तिं परमया मुदा ।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसादनीम् ॥ २२

सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ २३

पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।
तमसस्तु रजस्तस्मात्सत्त्वं यद्ब्रह्मदर्शनम् ॥ २४

भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् ।
सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिह ॥ २५

मुमुक्षवो घोररूपान्हित्वा भूतप[1]तीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २६

रजस्तमः प्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ २७

वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८

वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥ २९

स एवेदं ससर्जाग्रे भगवानात्ममायया ।

---

1 तींस्तथा

सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥ ३०

तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तः प्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥ ३१

यथा ह्यवहितो वह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२

असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥ ३३

भावयत्येष सत्त्वेन लोकान्वै लोकभावनः ।
लीलावतारानुरतो देवतिर्यङ्नरादिषु ॥ ३४

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्रिकायां
संहितायां प्रथमस्कन्धे द्वितीयोऽध्यायः ॥

---

## ॥ तृतीयोऽध्यायः ॥

सूतः—

जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १

यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजां पतिः ॥ २

यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः ।
तद्वै भगवतो रूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३

पश्यन्त्यदो रूपमदभ्रचक्षुषा
सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्धश्रवणाक्षिनासिकं
सहस्रमौल्यम्बरकुण्डलोल्लसत् ॥ ४

एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्यङ्नरादयः ॥ ५

स एव प्रथमं देवः कौमारं सर्गमास्थितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्यमखण्डितम् ॥ ६

द्वितीयं तु भवायास्य रसातलगतां महीम् ।
उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७

तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः ॥ ८

तुर्ये धर्मकलासर्गे नरनारायणावृषी ।
भूत्वा[1]त्मोपशमोपेतमकरोद्दुश्चरं तपः ॥ ९

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ १०

ष[2]ष्ठे अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥ ११

ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत ।

---

1 शमदमोपेत 2 द्दमते

स यामाद्यैः सुरगणैरपात्स्वायम्भुवान्तरम् ॥ १२
अष्टमे मेरुदेव्यां तु नाभेर्जात उरुक्रमः ।
दर्शयन्वर्त्म धीराणां सर्वाश्रमनमस्कृतम् ॥ १३
ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४
रूपं स जगृहे मात्स्यं चाक्षुषोदधिसम्प्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५
सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ १६
धान्वन्तरं द्वादशमं त्रयोदशममेव च ।
अपाययत्सुरानन्यान्मोहिन्या मोहयन्स्त्रिया ॥ १७
चतुर्दशं नारसिंहं बिभ्रद्दैत्येन्द्रमूर्जितम् ।
ददार करजैर्[1] वक्षस्येरकां कटकृद्यथा ॥ १८
पञ्चदशं वामनकं कृत्वाऽगादध्वरं बलेः ।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् ॥ १९
अवतारे षोडशमे पश्यन् ब्रह्मद्रुहो नृपान् ।
त्रिःसप्तकृत्वः कुपितो निःक्षत्रामकरोन्महीम् ॥ २०
ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१

---

1 ऊरावेरकान्

नरदेवत्वमापन्नः सुरकार्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्याण्यतःपरम् ॥ २२
एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भरम् ॥ २३
ततः कलौ सम्प्रवृत्ते सम्मोहाय सुरद्विषाम् ।
बुद्धो नाम्ना[1]ऽजनसुतः कीकटेषु भविष्यति ॥ २४
अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।
जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५
अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।
यथाऽविदासिनः कुल्याः सरसस्युस्सहस्रशः ॥ २६
ऋषयो मनवो देवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयस्तथा ॥ २७
एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८
जन्म गुह्यं भगवतो य एतत्प्रयतो नरः ।
सायं प्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९
एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः ।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३०
यथा नभसि मेघौघो रेणुर्वा पार्थिवोऽनिले ।

---

1 जिन

एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१

अतः परं यदव्यक्तमव्यूढगुण[1]व्यूहितम् ।
अदृष्टाश्रुतवस्तुत्वात्स जीवो यत्पुनर्भवः ॥ ३२

यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३

यद्येषोपरता देवी मायावैशारदी मतिः ।
सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥ ३४

एवं जन्मानि कर्माणि ह्यकर्तुरजनस्य च ।
वर्णयन्ति स्म कवयो वेदगुह्यानि हृत्पतेः ॥ ३५

स वा इदं विश्वममोघलीलः
सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।
भूतेषु चान्तर्हित आत्मतन्त्रः
षाड्वर्गिकं जिघ्रति षड्गुणेशः ॥ ३६

न चास्य कश्चिन्निपुणेन धातु-
रवैति जन्तुः कुमनीष ऊतीः ।
नामानि रूपाणि मनोवचोभिः
सन्तन्वतो नटचर्यामिवाज्ञः ॥ ३७

स वेद धातुः पदवीं परस्य
दुरन्तवीर्यस्य रथाङ्गपाणेः ।

---

1 बृंहितम्

योऽमायया सन्ततयानुवृत्त्या
भजेत तत्पादसरोजगन्धम् ॥ ३८

अथेह धन्या भगवन्त इत्थं
यद्वासुदेवेऽखिललोकनाथे ।
कुर्वन्ति सर्वात्मकमात्मभावं
न यत्र भूयः परिवर्त उग्रः ॥ ३९

इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
उत्तमश्लोकचरितं चकार भगवानृषिः ॥ ४०

निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ।
तदिदं ग्राहयामास सुतमात्मवतां वरम् ॥ ४१

सर्ववेदेतिहासानां सारं सारं समुद्धृतम् ।
स तु संश्रावयामास महाराजं परीक्षितम् ॥ ४२

प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ।
कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह ॥ ४३

कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः ।
तत्र कीर्तयतो विप्रा विप्रर्षेर्भूरितेजसः ॥ ४४

अहं चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ।
[1]सोऽहं वः श्रावयिष्यामि यथाऽधीतं यथामति ॥ ४५

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्रिकायां
संहितायां प्रथमस्कन्धे तृतीयोऽध्यायः ॥

---

1 यूयं व्यवसिता विप्रा जिज्ञासायां च निष्ठिताः । [इति क्वचिदधिकः पाठः]

## ॥ चतुर्थोऽध्यायः ॥

व्यासः—

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ।
वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १

शौनकः—

सूत सूत महाभाग वद नो वदतां वर ।
कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः ॥ २

कस्मिन्युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।
कुतः सञ्चोदितः कृष्णः कृतवान्संहितां मुनिः ॥ ३

[1]तत्र पुत्रो महायोगी समदृङ्निर्विकल्पकः ।
एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४

दृष्ट्वाऽनुयान्तमृषिमात्मजमप्यनग्नं
देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ।
तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति
स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः ॥ ५

कथमालक्षितः पौरैः सम्प्राप्तः कुरुजाङ्गलान् ।
उन्मत्तमूकजडवद्विचरन् गजसाह्वये ॥ ६

कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।

---

1 तस्य

संवादः समभूत्तात यत्रैषा सात्वती श्रुतिः ॥ ७
स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ।
अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ॥ ८
अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ।
तस्य जन्म महाश्चर्यं कर्माणि च गृणीहि नः ॥ ९
स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्धनः ।
प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम् ॥ १०

नमन्ति यत्पादनिकेतमात्मनः
शिवाय हानीय धनानि शत्रवः ।
कथं स वीरः श्रियमङ्ग दुस्त्यजां
युवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११
शिवाय लोकस्य भवाय भूतये
य उत्तमश्लोकपरायणा जनाः ।
जीवन्ति नात्मार्थमसौ पराश्रयं
मुमोच निर्विद्य कुतः कलेबरम् ॥ १२

तत्सर्वं नः समाचक्ष्व पृष्टो यदिह किञ्चन ।
मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १३

सूतः—

द्वापरे समनुप्राप्ते तृतीये युगपर्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १४

स कदाचित्सरस्वत्या उपस्पृश्य जलं शु[1]चि ।
विविक्त[2]देश आसीन उदिते रविमण्डले ॥ १५

परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ।
युगधर्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६

भौतिकानां च भावानां शक्तिह्रासं च तत्कृतम् ।
अश्रद्दधानान्निःसत्त्वान्दुर्मेधान्ह्रसितायुषः ॥ १७

[3]दुर्भगांश्च जनान्वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥ १८

चातुर्होत्रं कर्मशुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद्यज्ञसन्तत्यै वेदमेकं चतुर्विधम् ॥ १९

ऋग्यजुः सामाथर्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणं च पञ्चमो वेद उच्यते ॥ २०

तत्रर्ग्वेदधरः पैलस्सामगो जैमिनिः कविः ।
वैशम्पायन एवैको निष्णातो यजु[4]षामुत ॥ २१

अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२

त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्ते शाखिनोऽभवन् ॥ २३

त एव वेदा दुर्मेधैर्धार्यन्ते पुरुषैर्यथा ।

---

1 चिः 2 एक 3 दुर्बलांश्च 4 षां गणे

एवं चकार भगवान्व्यासः कृपणवत्सलः ॥ २४

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥ २५

इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५॥

एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।
सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ २६॥

नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ।
वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ २७॥

धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८॥

भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादि स्त्रीशूद्रादिभिरप्युत ॥ २९॥

[1]तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।
असम्पन्न इवाभाति ब्रह्मवर्चस्यसत्तमः ॥ ३०॥

किंवा भागवता धर्मा न प्रायेण निरूपिताः ।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१॥

तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः ।
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३२॥

---

1 अथापि

तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ।
पूजयामास विधिवन्नारदं सुरपूजितम् ॥ ३३॥

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्रिकायां
संहितायां प्रथमस्कन्धे चतुर्थोऽध्यायः ॥

---

## ॥ पञ्चमोऽध्यायः ॥



(व्यासनारदसंवादः)

सूतः—

अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः ।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १

नारदः—

पाराशर्य महाभाग भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २

जिज्ञासितं सुसंपन्नमपि ते महदद्भुतम् ।
कृतवान्भारतं यस्त्वं सर्वार्थपरिबृंहितम् ॥ ३

जिज्ञासितमधीतं च यत्तद्ब्रह्म सनातनम् ।
अथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४

व्यासः—

अस्त्येव मे सर्वमिदं त्वयोक्तं
तथापि नात्मा परितुष्यते मे ।

तन्मूलमव्यक्तमगाधबोधं
पृच्छामहे त्वात्मभवात्मभूतम् ॥ ५

स वै भवान्वेद समस्तगुह्य-
मुपासितो यत्पुरुषः पुराणः ।
परावरेशो मनसैव विश्वं
सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६

त्वं पर्यटन्नर्क इव त्रिलोकी-
मन्तश्चरो वायुरिवात्मसाक्षी ।
परावरे ब्रह्मणि धर्मतो व्रतैः
स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७

श्रीनारदः—

भवताऽनुदितप्रायं यशो भगवतोऽमलम् ।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८

यथा धर्मादयश्चार्था मुनिवर्यानुकीर्तिताः ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९

न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रं प्रगृणीत कर्हिचित् ।
यद्वायसं तीर्थमुशन्ति मानसाः
न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ १०

तद्वाग्विसर्गो जनताघविप्लवो
यस्मिन्प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोङ्कितानि
यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११

नैष्कर्म्यमप्यच्युतभाववर्जितं
न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म यदप्यकारणम् ॥ १२

अथो महाभाग भवानमोघदृक्
शुचिश्रवाः सत्यरतो धृतव्रतः ॥
उरुक्रमस्याखिलबन्धमुक्तये
समाधिनानुस्मर तद्विचेष्टितम् ॥ १३

ततोऽन्यथा किञ्चन यद्विवक्षतः
पृथक्दृशस्तत्कृतरूपनामभिः ।
न कुत्रचित्क्वापि च दुःस्थिता मति-
र्लभेत वाताहतनौरिवास्पदम् ॥ १४

जुगुप्सितं धर्मकृतेऽनुशासतः
स्वभावरक्तस्य महान्व्यतिक्रमः ।
यद्वाक्यतो धर्म इतीतरः स्थितो
न मन्यते तस्य निवारणं जनः ॥ १५

विचक्षणोऽस्यार्हति वेदितुं विभो-
रनन्तपारस्य निवृत्तितः सुखम् ।
प्रवर्तमानस्य गुणैरनात्मन-
स्ततो भवान्दर्शय चेष्टितं विभो ॥ १६

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे-
र्भजन्नपक्वोऽथ पतेत्ततो यदि ।
यत्र क्व वाऽभद्रमभूदमुष्य किं
को वार्थ आप्तो भजतां स्वधर्मतः ॥ १७

तस्यैव हेतोः प्रयतेत कोविदो
न लभ्यते यद्भ्रमतामुपर्यधः ।
तल्लभ्यते दुःखवदन्यतः सुखं
कालेन सर्वत्र गभीररंहसा ॥ १८

न वै जनो जातु कथञ्चनाव्रजेत्
मुकुन्दसेव्यन्यवदङ्ग संसृतिम् ।
स्मरन्मुकुन्दाङ्घ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहो यतः ॥ १९

इदं हि विश्वं भगवानिवेतरो
यतो जगत्स्थाननिरोधसम्भवाः ।
तद्धि स्वयं वेद भवांस्तथापि वै
प्रादेशमात्रं भवतः प्रदर्शितम् ॥ २०

त्वमात्मनात्मानमवेह्यमोघदृक्
परस्य पुंसः परमात्मनः कलाम् ।
अजं प्रजातं जगतः शिवाय त-
न्महानुभावाभ्युदयोऽधिगण्यताम् ॥ २१

इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम् ॥ २२

अहं पुरातीतभवेऽभवं मुने
दास्यास्तु कस्याश्चन वेदवादिनाम् ।
निरूपितो बालक एव योगिनां
शुश्रूषणे प्रावृषि निर्विविक्षताम् ॥ २३

ते मय्यपेताखिलचापलेऽर्भके
दान्ते धृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपां यद्यपि तुल्यदर्शनाः
शुश्रूषमाणे मुनयोऽल्पभाषिणि ॥ २४

उच्छिष्टलेपाननुमोदितो द्विजैः
सकृत्स्म भुञ्जे तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म एवात्मरुचिः प्रजायते ॥ २५

तत्रान्वहं कृष्णकथाः प्रगायता-
मनुग्रहेणाश्रृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विश्रृण्वतः
प्रियश्रवस्यङ्ग ममाभवद्रुचिः ॥ २६

तस्मिंस्तदा लब्धरुचेर्महामुने
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाहमेतत्सदसत्स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे ॥ २७

इत्थं शरत्प्रावृषिकावृतू हरे-
र्विश्रृण्वतो मेऽनुसवं यशोऽमलम् ।
सङ्कीर्त्यमानं मुनिभिर्महात्मभि-
र्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥ २८

तस्यैवं मेऽनुरक्तस्य प्रश्रितस्य हतैनसः ।
श्रद्दधानस्य बालस्य दान्तस्यानुचरस्य च ॥ २९

ज्ञानं गुह्यतमं यत्तत्साक्षाद्भागवतोदितम् ।
अन्ववोचन्गमिष्यन्तः कृपया दीनवत्सलाः ॥ ३०

येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदं येन गच्छन्ति तत्पदम् ॥ ३१

एतत्संसूचितं ब्रह्मंस्तापत्रयचिकित्सितम् ।
यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् ॥ ३२

आमयो यश्च भूतानां जायते येन सुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥ ३४
यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५
कुर्वाणा यत्र कर्माणि भगवच्छिक्षयाऽसकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ३६
नमो भगवते तुभ्यं वासुदेवाय धीमहि ।
प्रद्युम्नायानिरुद्धाय नमः सङ्कर्षणाय च ॥ ३७
इति मूर्त्यभिधानेन मन्त्रमूर्तिममूर्तिकम् ।
यजते यज्ञपुरुषं स सम्यग्दर्शनः पुमान् ॥ ३८
इमं स्वनिगमं ब्रह्मन्नवेत्य मदनुष्ठितम् ।
अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशवः ॥ ३९

त्वमप्यदभ्रश्रुतविश्रुतं विभोः
समाप्यते येन विदां बुभुत्सितम् ।
[1]आख्याहि दुःखैर्मुहुरर्दितात्मनां
[2]सङ्क्लेशनिर्वाणमुशन्ति नान्यथा ॥ ४०

इति श्रीमद्भागवते महापुराणे अष्टादशसहस्त्रिकायां संहितायां प्रथमस्कन्धे पञ्चमोऽध्यायः ॥

---

1 प्रख्याहि 2 यत्क्लेश

## ॥ षष्ठोऽध्यायः ॥

सूतः—

एवं निशम्य भगवान्देवर्षेर्जन्म कर्म च ।
भूयः पप्रच्छ तं ब्रह्मन्व्यासः सत्यवतीसुतः ॥ १

व्यासः—

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव ।
वर्तमानो वयस्याद्ये ततः किमकरोद्भवान् ॥ २

स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः ।
कथं चेदमुदस्राक्षीः काले प्राप्ते कलेबरम् ॥ ३

प्राक्कल्पविषयामेतां स्मृतिं ते सुरसत्तम ।
न ह्येष व्यवधात्काल एष सर्वनिराकृतिः ॥ ४

नारदः—

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिर्मम ।
वर्तमानो वयस्याद्ये तत एतदकारषम् ॥ ५

एकात्मजा मे जननी योषिन्मूढा च किङ्करी ।
मय्यात्मजेऽनन्यगतौ चक्रे स्नेहानुबन्धनम् ॥ ६

साऽस्वतन्त्रा न कल्पाऽसीद्योगक्षेमं ममेच्छती ।
ईशस्य हि वशे लोको योषा दारुमयी यथा ॥ ७

अहं च तद्ब्रह्मकुल ऊषिवांस्तदवेक्षया ।

दिग्देशकालाव्युत्पन्नो बालकः पञ्चहायनः ॥ ८
एकदा निर्गतां गेहाद्दुहन्तीं निशि गां पथि ।
सर्पोऽदशत्पदा स्पृष्टः कृपणां कालचोदितः ॥ ९
तदा तदहमीशस्य भक्तानां शममीप्सतः ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तराम् ॥ १०
स्फीताञ्जनपदांस्तत्र पुरग्रामव्रजाकरान् ।
खेटखर्वटवाटीश्च वनान्युपवनानि च ॥ ११
चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ।
जलाशयाञ्छिवजलान्नलिनीः सुरसेविताः ॥ १२
चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमरश्रियः ।
नलवेणुशरस्तम्बकुशकीचकगह्वरम् ॥ १३
एक एवातियातोऽहमद्राक्षं विपिनं महत् ।
घोरं प्रतिभयाकारं व्यालोलूकशिवाजिरम् ॥ १४
परिश्रान्तेन्द्रियात्माहं तृट्परीतो बुभुक्षितः ।
स्नात्वा पीत्वा ह्रदे नद्या उपस्पृष्टो गतश्रमः ॥ १५
तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आ[1]स्थितः ।
आत्मनात्मानमात्मस्थं यथाश्रुतमचिन्तयम् ॥ १६
ध्यायतश्चरणाम्भोजं भावनिर्जितचेतसा ।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥ १७

1 श्रितः

